प्रस्तुतेऽस्मिन् ग्रन्थे ब्रह्मणोऽद्वैत–द्वैत–द्वैताद्वैत शक्तिस्वरूपाणां गाम्भीर्यपूर्ण विवेचनं कृतमास्ते। एतस्य निरन्तराभ्यासेन कोऽपि जन: ज्ञानवान् सिद्धश्च भवितुमर्हति य: केवलमिच्छामात्रेण स्वकार्याणां विभिन्न घटनानां मोक्षमार्गस्य च प्राप्तिं कर्तुं प्रभवति। ग्रन्थेऽस्मिन् कतिपययन्त्राणां पाठानाञ्च समावेशो वर्तते। येवामनुष्ठानेन पाठेन च ज्ञान प्रकाशस्य प्रादुर्भाव: पाठका: स्वयमेवास्याध्ययनं विधाय आनन्दानुभवं कृत्वास्य जीवनोपयोगिता विषये स्व–भावनां सम्प्रेषणंमेनं जनं प्रति ज्ञापयिष्यतीति। स्वभावत: सञ्जातत्रुटीनां कृते गुणैक पक्षपातिन: सुधिय: निवेद्यन्ते।

**ISBN** - 81 - 87415 - 13 - 4

मूल्य रू०– २००.००

# शक्तितत्त्वविमर्शः

लेखकः
डॉ. देशराजत्रिपाठी
पी०एच्–डी
योगतन्त्राचार्यः
समयाचारसाधकः भागवतव्यासश्च






प्रकाशकः
भारतीय विद्या संस्थान
जगतगंज, वाराणसी

प्रकाशक :

**BHARATIYA VIDYA SANSTHAN**

**भारतीय विद्या संस्थान**

प्रकाशक एवं पुस्तक विक्रेता

सी. २७/५९, जगतगंज, वाराणसी-२२१ ००२



प्रथम संस्करण : २०००

मूल्य :

**रु. २००.०० रुपये**

ISBN-81-87415-13-4

फोटो टाइपसेटिंग

**श्रीवास्तव प्रिण्टर्स**

जे. १२/३१, जगतगंज, वाराणसी-२२१ ००२

**फोन : २००३५२**




# समर्पणम्

पित्रोः पादपद्मेषु सादरं
सश्रद्धंच समर्पितोऽयं ग्रन्थः।

# मङ्गलाचरणम्

प्रचण्डचण्डमुण्डयोर्महाबलैकखण्डिनी,
ह्यनेकरुण्डमुण्डयुग्रणे कलैकदायिनी।
क्वचित्त्वशक्तिकारिणी रमाविलासदायिनी,
मुदोऽस्तु कालिका सदा समस्ततापहारिणी ॥ १ ॥

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य।
पादाम्बुजं भवतु वो विजयाय मन्जु,
मञ्जीरसिञ्चितमनोहरमम्बिकायाः ॥ २ ॥

ब्रह्मादयोऽपि यदयाङ्गतरङ्गभङ्ग्या,
सृष्टिस्थितिप्रलयकारणतां व्रजन्ति।
लावण्यवारिनिधिवीचिपरिप्लुतायै,
तस्यै नमोऽस्तु सततं हरवल्लभायै ॥ ३ ॥

मृणालव्यालवलया, वेणीबन्धकपर्दिनी।
हरानुकारिणी यातु लीलया पार्वती जगत् ॥ ४ ॥

अपर्णैव लता सेव्या विद्वद्भिरिति मे मतिः।
ययाऽऽवृत्तः पुराणोऽपि स्थाणुः सूतेऽमृतं फलम् ॥ ५ ॥



# कृतज्ञताप्रकाशनम्

काश्यां सततं विराजमानस्य सान्नपूर्णस्य भगवतो विश्वनाथस्य महत्या कृपया ममायं शोधप्रबन्धः पूर्णतां गतः। अत एव सर्वप्रथमं तच्चरणेषु सादरं सश्रद्धं च प्रणतिं विनिवेदयामि।

महनीयस्यास्य शोधप्रबन्धस्य लेखने मम किञ्चित् बुद्धिकौशलं नास्ति। एतत् सर्वं स्नेहमूर्तीनां भक्तिभावपूरितानां मम मातृवराणां स्व. गंगादेवीनां, सन्ध्योपासनधर्माचरणेषु तत्पराणां शिल्पकलातन्त्राचार्याणां मम तातपादानां स्व. श्रीदेवदत्तत्रिपाठिनाञ्चाशीर्वचोभ्यः सम्पन्नम्। तेषां मातृपितृचरणानां स्नेहं स्मारं स्मारमहं पारेशतं प्रणामाञ्जलय उपहरे तयोः चरणकमलेषु।

अतः परं दीक्षागुरून् श्रीशिवजीकैलाशी महाभागान् प्रणामाञ्जलिं श्रद्धासुमनञ्च समर्पयामि।

संस्कृतप्रचारप्रसारकार्येषु सततं प्रयतमानानां महनीययशसां सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य कुलपतिपदमलंकुर्वतां डॉ. मण्डनमिश्रमहोदयानां प्रतिकुलपतिपदमलंकुर्वतां डॉ. रामजीमालवीयमहाशयानामभिनन्दनं करोमि, येषां कुलपतित्वे प्रतिकुलपतित्वे च शोधप्रबन्धोऽयं उपाध्यर्हतामगात्।

परमोदारचरितानां विविधविद्यासु पारङ्गतानां तान्त्रिकशिरोमणीनां महामहनीयानां संस्कृतविश्वविद्यालयस्य साङ्ख्ययोगतन्त्रागमविभागे उपाचार्य-पदमलंकुर्वतां श्रीमतां डॉ. हीरालालमिश्रमहाभागानां चरणेषु श्रद्धासुमनाञ्जलिं विनिवेद्य कृतज्ञतां ज्ञापयामि। येषां सन्निर्देशने, महतीकृपया सत्प्रेरणया च ममेदं महद्दुस्तरमनुसन्धानकार्यं सरलमिव सञ्जातम्। अस्मिन्नेव क्रमे श्रीमतीं पूजनीयां पवित्रभावनोपेतां पुत्रमिव स्नेहप्रदात्रीं श्रीमतीविद्यावतीदेवीं सततं हृदयेनाभिवन्द्यते, यासां वात्सल्येन सर्वविधसाहाय्येन च निश्चिन्ततामनुभूयाहं शोधकर्मणि सफलतामवाप्तवान्।

अतः परं प्रातःस्मरणीयाः पूज्याः दिवंगत नातुलः श्रीठाकुरजीमहाभागाः, मातुलः परमश्रद्धेयाः श्रीजगदम्बाप्रसादमिश्रमहोदयाश्च ममाजीवनं सादरं स्मरणीयाः सन्ति। एभ्यः शोधप्रबन्धपरीक्षणशुल्कमवाप्य मम व्ययभारो लघुतरः सञ्जातः। एतेषां चरणेषु सततं प्रणामाञ्जलिं समर्प्य कृतज्ञताञ्च प्रकाशयामि।

एवमेव अयोध्यास्थितस्य "बड़ीछावनी" इत्याख्यस्याश्रमस्य पीठाधीश्वराणां परमवैभवशालिनां श्रीमतां जगदीशदासमहाभागानामाधमर्ण्यमावहामि। एभ्य एकचत्वारिंशद् रूप्यकाणि साहाय्यमवाप्य शोधप्रबन्धस्य टंकणादिकार्यस्य श्रीगणेशं कृतवान्। एतेषां भूयोभूयः कृतज्ञतां ज्ञापयामि।

स्वकीयं भ्रातरं श्रीराजारामत्रिपाठिनं श्रीरामकुमारत्रिपाठिनं स्व. सुरेशकुमारत्रिपाठिनञ्च (गुड्डू) साधुवादेन समाजयामि। एतेषां स्नेहपूर्णप्रेरणया सहायता-प्रदानेन च शोधकर्मणि मम प्रवृत्तिर्जाता। एतेषां प्रति भूयोभूयः कृतज्ञतां ज्ञापयामि।

अतः परं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य शिक्षाशास्त्रविभागस्य कर्मचारिणं श्रीभोलानाथमिश्रं शुभाशिषान् सभाजयामि। एभ्यः निःशुल्कटंकणपत्रादिकं लब्ध्वा शोधप्रबन्धस्य टंकणकार्यं स्वल्पव्ययेन सञ्जातम्। एभिः मामभृशमुपकृतम्।

एवमेव भ्रातृकल्पं श्रीशशिधरमिश्रमहं शुभाशिषा स्नेहेन च धन्यवादान् वितरामि। शोधप्रबन्धस्य टंकणजन्यदोषानपाकरणे एतेन मम साहाय्यमकरोत्। अन्येषाममि येषां साहाय्यं लब्धम्, तेषां समेषां कृतज्ञतां व्याहृत्य विरमति एष जनः। तथाहि—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥

॥ इति शम्॥

*विदुषां वशंवदः*

तन्त्राचार्य देशराज त्रिपाठी

संस्थापक

श्रीदेवदत्त गंगा आश्रम

ग्रा० अकबापुर पोस्ट-सरैया महीपत सिंह

सीतापुर (उ. प्र.)

# प्रस्तावना

भारतीयदर्शनेषु सर्वाण्यपि शैवदर्शनानि आगप्रामाण्यं स्वीकुर्वन्ति। शैवदर्शनेषु द्वैतशैवागमाः शैवद्वैताद्वैतागमाः शैवाद्वैतागमाश्च सन्ति। एषु सर्वेषु शक्तितत्त्वं प्राधान्येन समादृतोऽस्ति। द्वैतशैवदर्शने पतिरेकः सर्वव्यापी नित्यः, निर्मलः, निमित्तकारणं जगतः सर्गादिकार्याणां कर्ता च उच्यते। स निमित्त-कारणं जगतः उदापादकारणम्, तच्छक्तयः माया च समवायिकारणम्; यथो-क्तम्—

**निमित्तकारणं त्वीशो ह्युपादानं च शक्तयः।**
**समवायि तथा माया कार्यमेतज्जगत्त्रयम्**[१] **॥ इति ॥**

शक्तिस्तस्योपादानभूता यया स विश्वं सृजति, यत्र जीवाः स्वस्वकर्मानुसारं दुःखानि सुखानि वाऽनुभवन्ति, अन्ते च पतिस्तान् पाशमुक्तान् करोति। इयमेका, यद्यपि सा भिन्नरार्जनीयसम्बन्धाद्भिन्नेन भाति। इयमपि पारमार्थतश्चित्-स्वरूपैव, अतश्च मायेव न विपरिणमते। पत्या सहैतस्याः समवायः सम्बन्धः। यथाह—

**शक्तौ यया स शम्भुर्मुक्तौ मुक्तौ च पशुगणस्यास्यो।**
**तामेकां चिद्रूपाः माद्यां सर्वात्मनाऽस्मि नतः ॥ इति ॥**

लकुलीशदर्शने ब्रह्मा जगत्कारणम् पतिरुपादानकारणम्, यतो मायाऽस्य शक्तिर्नामा स्यात् स्वातन्त्र्येण सत्तां भज्यापि तु तस्यैव विशेषरूपेण। अत इदं मायिमायाविशिष्टं चोच्यते—

**मायां तु प्रकृतिं विद्याद् मायिनन्तु महेश्वरम्**[३] **॥**

शैवद्वैताद्वैत लकुलीशपाशुपतदर्शने त्रीणि तत्त्वानि स्वीक्रियन्ते। पतिः पशु योगश्चेति। लकुलीशमते कार्यं विद्याकलापशुत्रिकं नित्यं पत्यावतिष्ठते, तत एव चोद्भवतीति पतिर्भवोद्भवः। सृष्टिरपि भवे विद्यमानानामेव वस्तूनां वृत्तिलाभमात्ररूपा। कार्यत्रयं पत्युः कारणस्य प्रधानगुणरूपायां धर्मरूपायां वा शक्तौ निलीनमास्ते। न चेत्थं कार्यकारणयोर्वृत्तिसंकरदोषो गोजाविमहिषी-क्षीरवद् दीपादित्यप्रकाशनयनरश्मिवच्चाऽसाङ्कर्यस्य समर्थनात्। पतिः सर्वव्यापकः, परं कार्याणि परिच्छिन्न व्यापकत्वानि। एवञ्च पशुः पुरुषो वा

---

१. मा. प. ३७
२. त. प्र. ५
३. तै. आ. ५६४

चतुर्विंशतितत्त्वानि कलादिप्रथिव्यन्तानि व्याप्नोति। कला, येह साङ्ख्यसम्मत-प्रधानापरपर्यात्वेनेव स्वीकृता प्रतिभाति, महदारभ्य तत्त्वन्तयोर्विंशतिकम्, एकमेव चाहङ्कारादि तदनन्तरपरिगणितं तत्त्वजातं व्याप्नोति। अतोऽस्मिन्दर्शने भिन्नानि कार्याणि मायिककोटिद्रव्यवन्न पृथक्सत्ताकानि अपि तूक्तप्रकारेणोत्तरोत्तरं तत्त्वं क्रमशोऽधराधरं व्याप्नोति। व्याप्यव्यापकौ पारस्परिकवैविक्त्येन प्रतीयते, हरिद्रोदकवत्। यथा हरिद्रारञ्जिते जले शीतस्पर्शसांसिद्धिकद्रवत्वप्रतीतिरूपतया जलस्य प्रतीतिस्तथैव गन्धवर्णघनक्षारत्वादिभिर्हरिद्रायाः।

अतः कार्यकारणे सहैव वर्तते, परं परस्परतः पृथक्सत्तां भजेते, स्वरूपभेदात्, यद्यप्युभे अप्युक्तप्रकारेण व्यापके। यतः कार्याभावे कारणमिति वक्तुं न युक्तिवादमसंगतम्, नापि पाल्याभावे पतिः पतिरिति। कारणे कार्यं भूमाविव बीजं पृथक्स्थिति। कारणं स्वतन्त्रं कार्यं चास्वतन्त्रम्। पूर्वः पतिरपरः पशुः। पूर्वश्चिद्रूपोऽपरश्चिदचिदुभयरूपः। एषु त्रिषु तत्त्वेषु षट्त्रिंशत्त-त्वानामन्तर्भावः स्वीक्रियते।

एवमेव शैवाद्वैतदर्शनं आगमशास्त्रस्य विशिष्टतां बिभर्ति तत्र शैवागमाश्रितानि चत्वारि दर्शनान्युपलभ्यते—(१) नन्दिकेश्वरदर्शनम्, (२) प्रत्यभिज्ञादर्शनम्, (३) क्रमदर्शनम्, (४) कुलदर्शनं च। इमानि सर्वाण्यप्यद्वैतं प्रतिपादयन्ति।

अत्र दर्शने शिवः, शक्तिः, चित्कला माया वा, ईश्वरः, पञ्चतन्मात्रा, पञ्चभूतानि, पञ्चज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्चप्राणाः, प्रकृतिपुरुषाः, त्रयोगुणाः अन्तःकरणं त्रयं चेति षट्त्रिंशत्तत्त्वानि स्वीक्रियन्ते।

**शैवाद्वैते शक्तिशक्तिमतोरभेदः यथा—**

**न शिवः शक्तिरहितो न शक्तिः शिववर्जिता।**
**तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव॥ इति॥**

एवञ्च-शक्तिरेव भगवता शिवस्य शिवता। शक्तिरहितः शिवः किमपि कर्तुं नालम्बवत्। शक्त्या रहितः शिवः शव इति कथ्यते। शिवशब्दे इकारः कामकलाशक्तिः, यया शिवः विश्वप्रपञ्चं सृजति।

शाक्तदर्शने शाक्ताः खलु जगत् कारणत्वेनांगीकृतां माया शब्दार्थभूतां शक्तिमभ्युपेत्य मातुलुंगगदाखटासिधारिणी महालक्ष्मीस्तस्याः प्रथमावतारः इति वर्णयन्ति। महालक्ष्मीरेषा कूटस्था-निराकारापि साकारा निर्गुणापि सगुणा च। इयं पराशक्तिः शिवशक्तिर्विष्णुशक्तिश्चेति कथ्यते। तस्याः महालक्ष्म्याः करधृतेन मातुलुंगेन (फलविशेषेण) सर्वफलदात्री, गदया क्रियास्वरूपा विपेक्षशक्तिः,

खेटेन (अस्त्रविशेषेण) ज्ञानशक्तिरुक्ता। सा च महाकाली महासरस्वतीति द्वे शक्ती उत्पाद्य, ब्रह्माणं पुरुषं श्रियं च स्त्रियमुत्पादयामास। स्वयं मिथुनं जनयित्वा स्वसुतेप्याह—अहमिव युवामपि मिथुमुत्पादयतमिति। तथाहि—जगदुपादानकारणं शक्तिरिति वैष्णवागमेऽपि प्रतिपादितम्।

पाञ्चरात्रागमे शक्तिवादसम्बन्धे बहुमूल्यवत्तथ्यं निहितमस्ति। तदुक्तं—

**शक्त्यात्मकः स भगवान् सर्वशक्त्युपबृंहितः[1]।**

शक्त्यात्मको हि भगवान् सर्वशक्तिभिः समृद्धः। भगवान् तस्य तत् सर्वशक्तिमत्तया जगत् सृजति। जयाख्यसंहितायां परमेश्वरस्य चतुर्विधा शक्तिरुक्ता—लक्ष्मीः कीर्तिः, जया, माया चेति। ताः सदा भगवदाश्रिताः। तदुक्तम्—

**लक्ष्मीः[2] कीर्तिर्जया माया देव्यस्तस्याश्रिताः सदा।**

एतासां चतुःशक्तीनां मध्ये लक्ष्मीदेवी सर्वश्रेष्ठा। ईश्वरस्यैश्वर्य—षाड्गुण्यानां ज्ञानशक्त्यैश्वर्यं बलवीर्यतेजसां मध्ये लक्ष्मीदेवी खल्वैश्वर्यस्वरूपिणी। रश्मिसूर्ययोरिव, तरङ्गसमुद्रयोरिव लक्ष्मीश्वरयोरिवाविनाभावः सम्बन्धः।

**सूर्यस्य रश्मयो यद्वदूर्मयश्चाम्बुधेरिव॥**
**सर्वैश्वर्यप्रभावेण कमला श्रीपतेस्तथा[3]॥**

उक्तञ्च—

**परमात्मा हरिर्देवस्तच्छशक्तिः श्रीरिहोदिता।**
**श्रीर्देवी प्रकृतिः प्रोक्ता केशवः पुरुषः स्मृतः॥**
**न विष्णुना विना देवी न हरिः पद्मजां विना।**

हरिः परमात्मा, तदीया शक्तिः श्रीरित्यभिहिता। श्रीर्देवी प्रकृतिः, केशवः पुरुषः। श्रीदेवी विष्णुं विना, विष्णुश्च श्रीदेवीं विना कदापि न तिष्ठति।

पाञ्चरात्रागमान्तर्भूतायाम् अहिर्बुध्न्यसंहितायां श्रीदेव्याः स्वरूपं विशद्भावेनालोचितं वर्तते। ग्रन्थप्रारंभे—''इन्दुशेखरा पञ्चकृत्यकारी'' इत्यनेन हरेः शक्तिः संस्तुता। सर्ग-(सृष्टि)-स्थितिसंहारतिरोभावानुग्रहाश्चेति पञ्च कृत्यानि। हरेः शक्तिः श्रीदेवीप्रोक्तपञ्चकृत्यानि सम्पादितानि।

**सोमसूर्यानलाकल्पामकल्पामिन्दुशेखराम् ।**
**पञ्चबिन्दुं हरेः शक्तिं पञ्चकृत्यकरीं नुमः॥**

---

१. जयाख्यसंहितायाम् ६/२२३
२. तदेव
३. तदेव

## श्रीविद्यायाः शक्तेः समुपासकानां संक्षिप्तं विवरणम्

त्रिपुरासिद्धान्तप्रतिपाद्यश्रीविद्यायाः द्वादशोपासकाः प्रसिद्धाः; तथाहि— (१) मनुः (२) चन्द्रः (३) कुबेरः (४) लोपामुद्रा (५) मन्मथः (६) अगस्त्यः (७) अग्निः (८) सूर्यः (९) इन्द्रः (१०) स्कन्दः (११) शिवः (१२) क्रोधभट्टारको दुर्वासाश्च। एतेषां प्रत्येकस्य पृथक्-पृथक् सम्प्रदायः आसीत्। श्रीनटनानन्दनाथकृत "कामकलाविलास" स्य टीकाया ज्ञायते यत् इह श्रीविद्यारत्नागमे सन्तानद्वयमस्ति, कामराजसन्तानो लोपामुद्रासन्तानश्चेति। कामराजसन्तानक्रमस्तु सकलविद्यानुसन्ध्यविच्छिन्न इति प्रचीनगुरवोऽप्याचक्षते। लोपामुद्रासन्तानक्रमस्तु विच्छिन्नतया प्रवर्तत इति वर्णयन्ति।

"कामराजविद्या" (कादिविद्या) त्रिपुराारहस्यमाहात्म्यखण्डे वर्णिताख्यानतो ज्ञायते, कामदेवो हि कृच्छ्रतपसा श्रीविद्यादेवीं संतोष्य बहूनेव दुर्लभवरानवाप। एवं स्वोपासितकामराजविद्योपासकानां हिताय च बहुशः प्रार्थित वरानलभत। तदवधि कामराजविद्याया विशेषप्रचारोऽभवत्। "कामराजविद्या" ककारादिपञ्चदशवर्णात्मिका, तेन हि तस्या नाम "कादिविद्ये" ति प्रसिद्धा।

"लोपामुद्राविद्या" तु हादिविद्या। **लोपामुद्रा**[1] ऋग्वेदस्यान्यतमा त्रिदुषी। एषा हि ऋषिमगस्त्यं पतित्वेन जग्राह, कृच्छ्रतपसा श्रीविद्यामाराध्य सिद्धिलाभमकरोच्च। येन च मन्त्रेण सिद्धिमलभत् सा "लोपामुद्राविद्येति" नाम्नाऽभिहिता। हकारादिपञ्चदशवर्णात्मिकात्वेन सा "हादिविद्ये" ति कथ्यते।

**अगस्त्यः** श्रीविद्याया अन्यतम आचार्यः। तत्कृतं "शक्तिसूत्रं" काशी सरस्वतीभवनग्रन्थमालायां प्रकाशितम्। "अथातः शक्तिजिज्ञासा" इति ह्यस्य प्रथमं सूत्रम्। निगूढतात्पर्यपूर्णा त्रयोदशाधिकशतसङ्ख्यकसूत्रनिबद्धा असमाप्ता, अल्पाक्षरा वृत्तिरेका च प्रकाशिता। विस्तृत-व्याख्याया अभावान्नैतेषां सूत्राणां रहस्यं सम्यग् बोधगम्यम्।

**दुर्वासा**प्रणीतः सूत्रग्रन्थोऽद्यापि नोपलभ्यते। तत्कृतः "त्रिपुरामहिम्नः स्तोत्रम्" नित्यानन्दविरचितव्याख्यासमेतम् निर्णयसागरीय-काव्यमालाया एकादशखण्डे तथा ललितास्तवरत्नस्य दशमखण्डे प्रकाशितम्। रुद्रांशेन जातत्वाद्दुर्वासाः क्रोधभैरवनाम्नाऽभिहितः। त्रिपुरामहिम्नः स्तोत्रस्य पुष्पिकाया मयं सकलागमाचार्य इत्यपरनाम्नोच्यते।

**दत्तात्रेयः परशुरामश्च—** दत्तात्रेयस्त्रिपुरातत्त्वस्य रहस्यविवृत्यर्थमष्टा-

---

१. ऋग्वेदे—१/१७९/१-२

दशसाहस्रीं ''दत्तसंहितां'' रचिततानिति किंवदन्ती लोकप्रसिद्धा। **परशुरामः** पञ्चाशत्खण्डैः षट्सहस्त्रसूत्रैरस्य संक्षिप्तसारमरचयत्। ततो हरितायनः समेधाः परशुराम कल्पसूत्रस्य पुनरेव दशखण्डात्मकं संक्षिप्तरूपमकरोत्। ''परशुराम कल्पसूत्रं'' रामेश्वरीविवृत्तिसहितं वरोदागायकोवाडसंस्कृतग्रन्थमालायां प्रकाशितम्।

प्रसङ्गादुच्यते—त्रिपुरोपासकसम्प्रदायमध्ये परशुरामो हि विशेषतया प्रसिद्ध आसीत्। परशुरामो दत्तात्रेयसमीपे परमेश्वर्यास्त्रिपुरायाः माहात्म्यं श्रुत्वा तदुपासनां ज्ञातुमाग्रहान्वितोऽभवत्। ततो दीक्षाग्रहणानन्तरं स गुरूपदेशतो महेन्द्रपर्वते द्वादशवर्षाणि यावत् तपस्तेपे। साधनाऽवसरे तस्यान्तरे तत्त्वजिज्ञासा जागरिताऽभवत्। ततश्च स स्वयं परमार्थतत्व-सम्बन्धि-समस्या-समूहस्य समाधानं कर्तुमशक्नुवन् सन् दत्तात्रेयसमीपमगच्छत्।

पुरा त्रेतायां परशुरामः श्रीरामचन्द्रात् पराभवं प्राप्य यदा लज्जया विमना बभूव, तदा संवर्तर्षिः परमार्थतत्त्वोपदेशेन तस्य शोकापनोदनमकरोत्। परन्तु तदानीं परशुरामः सवंर्तकथिततत्त्वोपदेशस्य सारमर्मं ज्ञातुमसमर्थ आसीत्। तदनन्तरं संवर्तकथिपरमार्थरहस्यं दत्तात्रेयाय सन्निवेद्य तत्सारमर्मं ज्ञातुं दत्तात्रेयसमीपे प्रार्थनामकरोत्। ततो दत्तात्रेयः परशुरामं प्रति संवर्तकथितपरमार्थरहस्यस्य व्याख्यां कृत्वा यथावदकथयत्। एतत् सर्वं ''त्रिपुरारहस्यज्ञानकाण्डे'' विवृतमस्ति। त्रिपुरारहस्यमाहात्म्यखण्डं-ज्ञानखण्डञ्च काशीतः प्रकाशितम्।

## ऐतिहासिकयुगसाधकाः

ऐतिहासिकयुगे श्रीविद्यासम्प्रदायमध्ये ये तावदाचार्या अविर्बभूवुस्तेषां मध्ये गौडपाद-शङ्कराचार्यपुण्यानन्दनाथामृतानन्दनाथ-भास्करायोमानन्दनाथ-रामेश्वरसूरप्रभृतिनाञ्च नामानि विशेषेणैवोल्लेखयोग्यानि। षष्ठसप्तमशताब्द्यां शङ्कराचार्यस्य परमं गुरु गौडपादः श्रीविद्योपासक आसीत्। तद्रचितं ''सुभगोदय'' स्तोत्रं ''विद्यारत्नसूत्र''ञ्चेति द्वावेव प्रसिद्धग्रन्थौ। श्रीविद्यारत्नसूत्र-स्योपरि शङ्करारण्यकृता ''दीपिका'' नाम्नी टीका वर्तते, तत्तु काशी-सरस्वती-भवनतः प्रकाशिता चाभवत्।

सप्तमाष्टमशताब्द्यां शङ्कराचार्यः श्रीविद्यामुपास्याद्वैतब्रह्म-ज्ञानमलभतेति लोक प्रसिद्धिरस्ति। तद्रचिते सौन्दर्यलहरीस्तोत्रे आनन्दलहरीस्तोत्रे चानुपमक-वित्वसुगभीरतत्त्वयोरपूर्वसमावेशो लक्ष्यते। इदानीमप्यस्य पञ्चाशत् टीका लभ्यन्ते। तन्मध्ये लक्ष्मीधरटीका (१२६८-१७७९ खी.) समधिका प्रचलिता।

आचार्यः शङ्करः स्वयमेव शृङ्गेरीमठे प्रधानोपास्यरूपेण श्रीविद्यायन्त्रं संस्थापितवान्। तत्प्रतिष्ठित-मठचतुष्टये गुरुपरम्परया अद्यापि श्रीविद्योपासना क्रियते।

पुण्यानन्दननाथविरचितः ''कामकलाविलासो'' नटनानन्दकृतं चिद्वल्ली व्याख्याविभूषिततात्पर्यप्रकाशश्च त्रिपुरासिद्धान्तस्य प्रसिद्धग्रन्थौ।

अमृतानन्दनाथरचिता योगिनीहृदयदीपिकाव्याख्या वामकेश्वरतन्त्रस्यांश-विशेषस्योत्तमा व्याख्या। त्रिपुरासिद्धान्तस्य तात्पर्यप्रकाशेऽस्याः विशेष-प्रयोजनीयता वर्तते।

अष्टादशशताब्द्याः पूर्वार्द्धे श्रीविद्यासम्प्रदायस्य प्रख्यातनामा शाक्त-दार्शनिको भास्कररायो भासुरानन्दनाथो वा आविर्बभूव। अनेन रचितो ग्रन्थसमूहः शाक्तमतस्य रहस्योद्घाटने प्रसिद्ध उपयोगी च वर्तते। तत्प्रणीतग्रन्थसमूहमध्ये वरिवस्यारहस्यम्, सौभाग्यभास्करः, ललितासहस्रनामभाष्यं, सेतुबन्धः नित्यषोडशिकार्णवटीका, गुप्तवती (श्रीचण्डीटीका), कौलत्रिपुरा कौलभावनायाश्च टीका समधिकप्रसिद्धा।

उमानन्दनाथस्तु भास्कररायस्य शिष्यः। स (१७५५ खीष्टाब्दे) नित्योत्सवपद्धतिमरचयत्।

रामेश्वरः रामेश्वरसूरिर्वा भास्कररायस्य प्रशिष्यः। स च (१८३१ खीष्टाब्दे) परशुरामकल्पसूत्रस्य सौभाग्यसुधोदयो नाम टीकामकरोत्। भास्कररायस्य शिष्यसम्प्रदायो महाराष्ट्रे सुदूरदक्षिणभारते चाद्यावधि वर्तते।

**चैतन्यसम्प्रदाये श्रीविद्याप्रभावः**—श्रीमन्महाप्रभोश्चैतन्यदेवस्याभिन्न-हृदयः सहयोगी पतितपावनोऽवधूतसन्यासी श्रीनित्यानन्दप्रभुः श्रीविद्योपासक आसीत्। अनेनाराधितं श्रीविद्यायन्त्रं (श्रीचक्रं) खडदहेऽद्यापि गोस्वामिनां मन्दिरे सयत्नरक्षितं पूजितञ्च भवति।

त्रिपुरोपनिषदतस्तथा त्रिपुरातापिन्युपनिषदतश्च ज्ञायते यत् श्रीविद्योपासना वैदिकीति। वेदतश्च सा तन्त्रे गृहीताऽभवत्।

## प्रकृतमनुसरामः

बहूनां साधकानां गुरुवर्याणाञ्च सन्निधिमवाप्य शक्तेः चरित्रं माहात्म्यञ्च श्रद्धया भूयोभूयः श्रुत्वा मम मनसि शक्तेः सूक्ष्माध्ययनस्य जिज्ञासा प्रादुर्बभूव। योगतंत्राचार्यपरीक्षां समुत्तीर्य सम्पूर्णानन्दसंस्कृतविश्वविद्याले ''विद्यावारिधि'' इत्युपाधये शक्तिविषयमधिकृत्य पञ्जीकरणाय गुरुवर्येभ्यः प्रार्थितम्। तेभ्यः

कृपया मम पञ्जीकरणं जातम्। ततश्च शक्तेः समाराधनधिया एष शोधप्रबन्धः पूर्णतामगात्। अयं शोधप्रबन्धः पञ्चाध्यायेषु विभक्तोऽस्ति। उपसंहारे च शक्तेः किमपि महत्त्वं लिखितम्। अत्र प्रथमाध्याये शक्तिस्वरूप-मीमांसा तन्त्रागमशास्त्रमाश्रित्य विविधशास्त्रेभ्यः संगृह्य च निरूपिता वर्तते। द्वितीयाऽ-ध्याये शिवशक्त्योरभेदसम्बन्धानुशीलनम् कृतम्। तृतीयाध्याये शक्तेरवस्था-भेदात् कार्यभेदाच्च तस्याः नामार्थानुशीलनम् कृतम्। चतुर्थाध्याये शक्तिपीठानां समीक्षणं तन्त्रागमशास्त्रं पुराणानि च समाश्रित्य कृतम्। पंचमाध्याये शिवशक्त्योः यामलभावः प्रतिपादितः। उपसंहारे च शक्तेः विश्वरूपानुशीलनं प्रतिपादितम्। परिशिष्टे सहायकग्रन्थानां सूची निबद्धास्ति।

अतः विविधग्रन्थानधीत्य गुरोः मार्गनिर्देशने मया शोधकार्ये परिश्रमो विहितः। तत्र यत् परमार्थं वस्तुतः तत् गुरूणां, यच्च अन्यथा तदस्माकमिति निवेदयतो मम कृपापात्रतामनुभय अनुग्रहपूर्वकं सुधियो विवेचयन्तु।

*विदुषां वशंवदः*

**देशराजत्रिपाठी**

आचार्यः शङ्करः स्वयमेव शृङ्गेरीमठे प्रधानोपास्यरूपेण श्रीविद्यायन्त्रं संस्थापितवान्। तत्प्रतिष्ठित-मठचतुष्टये गुरुपरम्परया अद्यापि श्रीविद्योपासना क्रियते।

पुण्यानन्दननाथविरचितः "कामकलाविलासो" नटनानन्दकृतं चिद्वल्ली व्याख्याविभूषिततात्पर्यप्रकाशश्च त्रिपुरासिद्धान्तस्य प्रसिद्धग्रन्थौ।

अमृतानन्दनाथरचिता योगिनीहृदयदीपिकाव्याख्या वामकेश्वरतन्त्रस्यांश-विशेषस्योत्तमा व्याख्या। त्रिपुरासिद्धान्तस्य तात्पर्यप्रकाशेऽस्याः विशेष-प्रयोजनीयता वर्तते।

अष्टादशशताब्द्याः पूर्वार्द्धे श्रीविद्यासम्प्रदायस्य प्रख्यातनामा शाक्त-दार्शनिको भास्कररायो भासुरानन्दनाथो वा आविर्बभूव। अनेन रचितो ग्रन्थसमूहः शाक्तमतस्य रहस्योद्घाटने प्रसिद्ध उपयोगी च वर्तते। तत्प्रणीतग्रन्थसमूहमध्ये वरिवस्यारहस्यम्, सौभाग्यभास्करः, ललितासहस्रनामभाष्यं, सेतुबन्धः नित्यषोडशिकार्णवटीका, गुप्तवती (श्रीचण्डीटीका), कौलत्रिपुरा कौलभावनायाश्च टीका समधिकप्रसिद्धा।

उमानन्दनाथस्तु भास्कररायस्य शिष्यः। स (१७५५ खीष्टाब्दे) नित्योत्सवपद्धतिमरचयत्।

रामेश्वरः रामेश्वरसूरिर्वा भास्कररायस्य प्रशिष्यः। स च (१८३१ खीष्टाब्दे) परशुरामकल्पसूत्रस्य सौभाग्यसुधोदयो नाम टीकामकरोत्। भास्कररायस्य शिष्यसम्प्रदायो महाराष्ट्रे सुदूरदक्षिणभारते चाद्यावधि वर्तते।

**चैतन्यसम्प्रदाये श्रीविद्याप्रभावः**— श्रीमन्महाप्रभोश्चैतन्यदेवस्याभिन्न-हृदयः सहयोगी पतितपावनोऽवधूतसन्यासी श्रीनित्यानन्दप्रभुः श्रीविद्योपासक आसीत्। अनेनाराधितं श्रीविद्यायन्त्रं (श्रीचक्रं) खडदहेऽद्यापि गोस्वामिनां मन्दिरे सयत्नरक्षितं पूजितञ्च भवति।

त्रिपुरोपनिषदतस्तथा त्रिपुरातापिन्युपनिषदतश्च ज्ञायते यत् श्रीविद्योपासना वैदिकीति। वेदतश्च सा तन्त्रे गृहीताऽभवत्।

## प्रकृतमनुसरामः

बहूनां साधकानां गुरुवर्याणाञ्च सन्निधिमवाप्य शक्तेः चरित्रं माहात्म्यञ्च श्रद्धया भूयोभूयः श्रुत्वा मम मनसि शक्तेः सूक्ष्माध्ययनस्य जिज्ञासा प्रादुर्बभूव। योगतंत्राचार्यपरीक्षां समुत्तीर्य सम्पूर्णानन्दसंस्कृतविश्वविद्याले "विद्यावारिधि" इत्युपाधये शक्तिविषयमधिकृत्य पञ्जीकरणाय गुरुवर्येभ्यः प्रार्थितम्। तेभ्यः

कृपया मम पञ्जीकरणं जातम्। ततश्च शक्तेः समाराधनधिया एष शोधप्रबन्धः पूर्णतामगात्। अयं शोधप्रबन्धः पञ्चाध्यायेषु विभक्तोऽस्ति। उपसंहारे च शक्तेः किमपि महत्त्वं लिखितम्। अत्र प्रथमाध्याये शक्तिस्वरूप-मीमांसा तन्त्रागमशास्त्रमाश्रित्य विविधशास्त्रेभ्यः संगृह्य च निरूपिता वर्तते। द्वितीयाऽ-ध्याये शिवशक्त्योरभेदसम्बन्धानुशीलनम् कृतम्। तृतीयाध्याये शक्तेरवस्था-भेदात् कार्यभेदाच्च तस्याः नामार्थानुशीलनम् कृतम्। चतुर्थाध्याये शक्तिपीठानां समीक्षणं तन्त्रागमशास्त्रं पुराणानि च समाश्रित्य कृतम्। पंचमाध्याये शिवशक्त्योः यामलभावः प्रतिपादितः। उपसंहारे च शक्तेः विश्वरूपानुशीलनं प्रतिपादितम्। परिशिष्टे सहायकग्रन्थानां सूची निबद्धास्ति।

अतः विविधग्रन्थानधीत्य गुरोः मार्गनिर्देशने मया शोधकार्ये परिश्रमो विहितः। तत्र यत् परमार्थं वस्तुतः तत् गुरूणां, यच्च अन्यथा तदस्माकमिति निवेदयतो मम कृपापात्रतामनुभय अनुग्रहपूर्वकं सुधियो विवेचयन्तु।

*विदुषां वशंवदः*

**देशराजत्रिपाठी**

# विषयानुक्रमः

# प्रथमोऽध्यायः
# शक्तिस्वरूप-मीमांसा

## वैदिकवाङ्मये शक्तिस्वरूपविमर्शः

शक्लृ-शक्तौ धातोः क्तिन् प्रत्यये कृते सति शक्तिशब्दो निष्पद्यते। तत्र कारणे वस्तुनि या कार्योत्पादनोपयोगी अपृथक्सिद्धधर्मविशेषः सा शक्तिः कथ्यते, यथाऽग्नौ दाहकता शक्तिः। सच्चिदानन्दस्य ब्रह्मणः स्वाभाविकी शक्तिः जगतः निमित्तकारण-भूता विवर्तोपादानकारणभूता च प्रतिपाद्यते। तथाहि—**"परास्य शक्तिर्विविधैव श्रूयते", "इन्द्रो मायाभिः पुरुरूप ईयत", "अजामेकां लोहितशुक्लकृष्णाम्"** इत्याद्याः श्रुतयः शक्तितत्त्वं समुद्गिरन्ति।

वेदो हि अखिलो धर्ममूलम्, तत्र भारतीयवाङ्मयस्य मूलभूतसिद्धान्ताः सन्निहिताः सन्ति। तस्यापि दर्शनस्य स्रोतभूतः—भगवान् वेदोः अखिलब्रह्माण्डस्य विश्वप्रपञ्चस्य स्थिति-संहारकारिणी विश्वेश्वरी महामाया पराशक्तिरेवास्ति। पराशक्तिरेव विश्वप्रपञ्चं सृजति, पालयति संहारयति च। अत एव सा ब्रह्माविष्णुशिवात्मिका च कथ्यते। ऋग्वेदोक्तदेवीसूक्ते शक्तेः विराट् स्वरूपस्य दर्शनं समुपलभ्यते। तत्र शक्तिः स्वयमेव स्वकीयस्य स्वरूपस्य वर्णनं विदधाति। तथाहि—

### वैदिकवाङ्मये शक्तितत्त्वम्

वेदेषु, उपनिषदेषु वेदाङ्गेषु च सर्वत्रैव शक्तितत्त्वस्य व्याख्यानं दरीदृश्यते। तत्रादौ वेददृष्ट्या शक्तिस्वरूपम् विमृश्यते—

**अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैस्त विश्वेदेवैः।**
**अहं मित्रावरुणोभा विभर्म्यहमिन्द्राग्नी उहमश्विनोभा[१]॥**

अत्र शक्तिः वदति यत् अहं सर्वजगतः कल्पनासादं सच्चित्सुखात्मकं परं ब्रह्मास्मि। अहं एकादशभिः रुद्रैः अष्टभिः वसुभिः तत्तद् देवात्मना चरामि। अहमेव द्वादशादित्यैः विश्वेदेवाख्यैः देवैः आत्मना चरामि। परब्रह्मात्मिका अहमेव मित्रावरुणौ देवौ धारयामि। इन्द्राग्नी अपि अहमेव धारयामि। उभौ अश्विनावपि अहमेव धारयामि। मत्स्वरूपे अद्वितीये ब्रह्मणि सर्वं जगत् सुक्तौ रजतमिव अध्यस्तं सत् दृश्यते।

---

१. अथर्वसं. ४/।

**अहं राष्ट्री संगमनी चिकितुषी प्रथमा यज्ञियानाम्।**
**ता मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूयीवेशयन्तः[१] ।।**

अहं राष्ट्री सर्वस्य जगत ईश्वरी। तथा वसूनां धनानां संगमनी संगमयित्री उपासकानां प्रापयित्री। चिकितुषी ब्रह्म स्वात्मतया साक्षात्कुर्वती। अत एव यज्ञीयानां यज्ञार्हाणां प्रथमा मुख्या। एवं गुणविशिष्टाहं तान् आवेशयन्तीं जीवभावेन आत्मानं प्रवेशयन्तीम् ईदृशीं मा पुरुत्रा बहुपु देशेषु व्यदधुः देवा विदधति कुर्वन्ति।

**मया सो अन्नमत्ति यो विपश्यति यः प्रणिति य ईं शृणोत्युक्तम्।**
**अमन्तवो मां त उप क्षियन्ति श्रुधि श्रत श्रद्धिवं ते वदामि[२] ।।**

योऽयमन्नमत्ति स भोक्तृशक्तिरूपया मयैवान्नमत्ति। यश्च विपश्यति आलोकयतीत्यर्थः। यश्च प्रणिति श्वासोच्छ्वासरूपं व्यापारं करोति सोऽपि मयैव। यश्चोक्तं शृणोति। य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवः अमन्यमानाः अजानन्तः उपक्षियन्त उपक्षीणाः संसारेण हीनाः भवन्ति। हे श्रुत विश्रुत सखे श्रुधि मया वक्ष्यमाणं शृणु। श्रद्धिवं श्रद्धिः श्रद्धा तया मुक्तम्। ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि।

**अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।**
**यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्[३] ।।**

अहं स्वयमेवेदं वस्तु ब्रह्मात्मकं वदामि। देवेभिः देवैरिन्द्रादिभिरपि जुष्टं सेवितमुतापि च मानुषेभिः मनुष्यैरपि जुष्टम्। अहम् यं पुरुषं कामये वाञ्छामि तं पुरुषमुग्रं सर्वेभ्योऽधिकं कृणोमि करोमि, तमेव ऋषिमतीन्द्रियार्थदर्शनं करोमि तमेव सुमेधां शोभनप्रज्ञं च करोमि।

**अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ।**
**अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश[४] ।।**

पुरा त्रिपुरविजयसंग्रामे रुद्राय रुद्रस्य महादेवस्य धनुश्चापमहमातनोमि आततं करोमि। किमर्थम्। ब्रह्मद्विषे ब्रह्मणः द्वेष्टारः शरवे शरुम् हिंसकं त्रिपुरनिवासिनं हन्तवे हन्तुं हिंसितुम्। अहमेव जनाय स्तोतृजनार्थं शत्रुभिः सह समदं संग्रामं कृणोमि। तथा द्यावापृथिवी दिवं च पृथिवीं च अन्तर्यामितया अहमेव आविवेश प्रविष्टवती।

**अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे।**
**ततो वितिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि[५] ।।**

अस्य भूतस्य मूर्धन् मूर्धनि उपरि अहं पितरमाकाशं सुवे। समुद्रे जलधौ

---

१. ऋक् सूक्त समुच्चय १८/३
२. ऋ. सू. सं. ८/४
३. ऋक् सू. सं. १८/५
४. तदेव १८/६
५. ऋ. सू. सं. १८/७

अप्सु उदकेषु अन्तर्मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते। यद्वा समुद्रेऽन्तरिक्षेऽप्सु अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्मचैतन्यं वर्तते, ततोऽहं कारणात्मिका सती विश्वा भुवना सर्वाणि भुवनानि अनुवितिष्ठे अनुप्रविश्य विविधं व्याप्य तिष्ठामि व्याप्नोमि। उत अपि च अमूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम्। उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उपस्पृशामि।

अहं परमात्मना तादात्म्यम् अनुभवन्ती वाक् अस्य दृष्टिगोचरस्य जगतः मूर्धन् मस्तके पितरं हिरण्यगर्भाख्यं सुवे सृजामि। मम योनिः मूलस्थानं समुद्रे पारावारे अप्सु जले अन्तः अस्ति। ततः तस्मात् स्थानात् अहं विश्वां सर्वाणि भुवना भुवनानि अनु अनुप्रविश्य व्याप्य इत्यर्थः, वितिष्ठे अनेकविधरूपैः तिष्ठामि। उत अपि च वर्ष्मणा स्वकीयेन व्यापकेन रूपेण अमूम् उपरिवर्तिनीम् द्यां दिवम् उपस्पृशामि तत्पर्यन्तम् व्याप्नोमि सर्वव्यापिकाहम् इत्यर्थः।

**अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा।**
**परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव[१]॥**

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आरभमाणा उत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्रवामि प्रवर्ते। वात इव यथा वातः परेणाप्रेरितः सन् स्वच्छयैव प्रवहति तद्वत्। परो दिवा आकाशस्य परस्तात्। परः एना पृथिव्या। अस्याः पृथिव्याः परस्तात्। अहं महिना महिम्ना एतावती संबभूव सर्वजगदात्मनाहं संभूतास्मि।

**अहं सोममाहवसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्।**
**अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते[२]॥**

अहमाहनसमाहन्तव्यमभिषोतव्यं सोमं बिभर्मि। तथा त्वष्टारमुत अपि च पूषणं भगं च अहमेव बिभर्मि। तथा हविष्मते हविर्युक्ताय सुप्राव्ये हविर्देवानां प्रापयित्रे तर्पयित्रे सुन्वते सोमाभिषवं कुर्वते यजमानाय द्रविणं धनं यागफलरूपमहमेव दधामि धारयामि।

वेदभगवता याः शक्तयः वर्णिताः तथा अध्यात्मवादिभिः[३] ब्रह्मविद्यारूपेण वेदान्तिभिः[४] सृष्टिरचनायाः कारणभूतेन लीलारूपेण योगिभिः[५] चिच्छक्तिस्वरूपेण

---

१. ऋ सू. स. १८/८ २. ऋ सू. स. १८/२

३. स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तः होवाच किमेतद्यक्षमिति ॥ ३/१२ ॥ सा ब्रह्मेति होवाच। केनोपनिषद ४/५

४. लोकवत्तु लीलाकैवल्यम् (ब्र. सू. २/१/३३) लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतोभूताद्योनेः संभवः (शां. भा. १/१/३)

५. पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठावाचीति श[illegible]रिति (यो. द. पा. ४/३४)

पूर्वमीमांसकैः[१] धर्मभंत्ररूपेण नैयायिकै :[२] नित्यतां परमाणुरूपेण तथा सांख्यदर्शनाचार्यैः[३] सृष्टिकर्तृत्वरूपेण वैष्णवभक्तैः[४] राधिकारूपेण कविकुलचूड़ामणिकालिदासेन[५] परमेश्वरेण सह सम्पृक्तरूपेण। गोस्वामितुलसीदासेन[६] अभिन्नभावापन्नसीतारामरूपेण तथा श्रीमद्भगवद्गीतायां[७] श्रीकृष्णेन मातारूपेण वर्णनं कृतं विद्यते।

श्रीकृष्णस्य[८] कृष्णायाश्च[९] लीलायाः उद्देश्ये किं वैशिष्ट्यम्? दुर्गासप्तशत्यां एका परमा शक्तिः, श्रीमद्भगवद्गीतायां च एकमेव परब्रह्मणः चिन्तनम्, अतः अत्र गीतासाङ्ख्यसिद्धान्त[१०] एक एव अयमेव निष्कर्षः यत् शक्तिः ब्रह्मणः अभिन्ना कार्यभेदात् स्वरूपं भिद्यते।

भगवतस्तु बह्वयः शक्तयः सन्त्यन्योन्यविरुद्धास्तत्तत्कार्यार्थनिर्मिताः। तत्र यस्यामेवासक्त्या क्रीडायां क्रियमाणायां तद्दोषप्रादुर्भावः सम्भाव्यते। तदैव तद्विरुद्धशक्तिप्रादुर्भावेन पूर्वान् दूरीकरोति तथा चिच्छक्त्या मायां व्युदस्य तिष्ठतीति न मायिकदोषसम्बन्धः, देशदोषस्त्वसम्भाव्य एव। सर्वधर्मास्पृष्टे केवलमात्मनि विद्यमानत्वात्[११]। सा च माया द्विविधा—स्वप्रतिकृत्या सम्बद्धं भगवन्तं जगद्रूपेण करोति, स्वेच्छया प्रादुर्भूतान्जीवांश्च व्यामोहयति। तदेयं सृष्टिर्जीवार्था भवति। अतो मायाया इदानींतनाया जीवमायेति नाम। तया सृष्टिप्रकारमाह—प्रकृतिं सिसृक्षतीम्। यद्यपि प्रकृतिपुरुषौ सृष्टौ तथापि पुरुषो भगवद्भागे पतित इति प्रकृतिं सिसृक्षतीमित्युक्तम्। तादृशीं मायां भगवाननुससार, तद्व्यापारानन्तरं स्वयं तदनुकूलतया

---

१. अथातो धर्म जिज्ञासा (१) चोदनालक्षणोऽर्थो धर्मः (२) स एव ब्रह्म धर्मः स च धर्म्म भिन्न एव "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः, तस्यैव धर्मत्वाच्छक्तिरिति संज्ञा।

२. सर्वं नित्यं पञ्चभूतनित्यत्वात् (न्याय. अ. ४।१।२९) जलादिपरमाणुरूपस्य नित्यत्वम्।

३. सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः "प्रकृतेर्महान् (सां. सू. १।६१) मूले मूलाभावादमूलं मूलम् १।६७

४. आह्लादिनीशक्तिः

राधा रामेश्वरी रासवासिनी रसिकेश्वरी।
कृष्णवामांशसम्भूता परमानन्दरूपिणी॥

५. वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥ (रघु)

६. शब्दार्थयोः तथा जलतरङ्गयोः यादृशी समानता अभिन्नता वा दृश्यते यस्य विषये उपचरितभेदः तथा यथार्थतः अभेदेन अन्वयः विधीयते तथाभूतं सीतारामपादयुगलं अहं वन्दे। यस्य खिन्नं परमं प्रियं विद्यते।

गिरा अरथ जल बीचि सम कहियत भिन्न न भिन्न।
बन्दऊँ सीताराम पद जिन्हहिं परम प्रिय खिन्न॥

७. पितामहस्य जगतो "माता" धाता पितामहः। गीता ९/१७

८. "प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" सुस्पष्टमिदं यत् आत्ममायायाः उद्भूतपरब्रह्म एव श्रीकृष्णः।

९. ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः। तस्यां विनिर्गतायां तु कृष्णाभूत् सापि पार्वती।
कालिकेति समाख्याता हिमालय कृताश्रया॥ (दुर्गा ५।१२, ८८ प्रकृतिः+पुरुष=ब्रह्मणः संयोगेन प्रकृतिः कार्यं विदधाति। अतएव ब्रह्म+माया=प्रकृतिः+पुरुषः=कृष्णः=कृष्णा (दुर्गा) अस्ति।

१०. शक्ति अंक—गीता प्रेस, गोरखपुर।

११. सुबोधिनी—१/७/२३

पितेव मिलितवानित्यर्थः। अस्यां सृष्टौ विशेषप्रयोजनमाह—अनामरूपात्मनिरूपानामनी विधित्समानः। पूर्वसृष्टौ न भगवतोऽवतारः। न नामानि रूपाणि च। इदानीं सृष्टेर्भक्तिप्रधानत्वाद्भगवतोऽवताररूपनामान्यपेक्ष्यन्ते। अतः पूर्वमनामरूपात्मनि स्वस्मिन्निदानीं रूपनामनी विधित्समान इति। अतो जीवार्थमेव स्वस्यापि रूपनामनी करोतीत्यर्थः। किञ्च, शास्त्रकृत-वेदकर्ता केवलनामरूपकरणे युगपदेव सर्वमुक्तिप्रसङ्गात्सृष्टिकलाह्रासः प्रसज्येत। उत्पादिते तु वेदे स्वभावगुणभेदेन भिन्नेन तेन व्यामोहितेषु कश्चिदेव मुच्यत इति क्रमेण सर्वगुक्तौ सृष्टिकालस्य ह्रासो न भवेत्[१]।

धर्मरूपेण भवत् इच्छारूपेण भवति। तत्र सदंशस्य क्रियारूपा शक्तिः। चिदंशस्य व्यामोहिका माया। आनन्दरूपस्य जगत्कारणभूता। एतत्त्रितयरूपा शक्तिः सच्चिदानन्दस्य भावस्त्वतलादिवाच्या। प्रजायेयेतीच्छया उत्कर्षापकर्षरूपेण[२] जाताः। तत्र आनन्द उत्कृष्टः। तदेतरौ तं सेवमानौ जातौ। तदा चिदंशस्य शक्तिरानन्दे गतत्वाज्ज्ञानधर्मस्य, तं व्यामोहयति तदा तस्य जीवत्वम्। सा पुरुषं व्यामोहयित्वा जीवतामापादयति। स हि मायया व्यामोहितो व्याकुलः सन् सदानन्दकृतसृष्टौ यः सूत्रात्मक आसन्यो दशविधप्राणरूपस्तमवलम्ब्य तिष्ठति तदा जीव इत्युच्यते। "**जीव प्राणधारणे**" इति धातोः कर्तरि अच् प्रत्ययः[३]।

यस्य भगवतो ज्ञानरूपस्य वशवर्तिनी काचिच्छक्तिर्मायेति। सा जगत्कर्तुर्मायातो भिन्ना। एतस्या व्यामोह एव फलम्। तस्या जयः प्राणिमात्रस्याशक्यः। इयमेव माया वेदस्तुतौ मारणीयत्वेन वेदैः प्रार्थिता। ते हि ज्ञानं बोधयन्ति। एषा तु मोहयति[४]।

यदा भगवान् स्वशक्तिरूपेणाविर्भूतस्तदा शक्तीनां मध्ये श्रीः प्रथमाः। सा शरीर एव बलवत् पूर्वं स्थिता। यदा भगवान् प्रभुत्वेनाविर्भूतस्तदा सापि भोग्यत्वेनाविर्भूता भार्येव। सा ह्यक्षरस्यानन्दरूपा[५]।

काचिद्भगवतः सिद्धिरस्ति राधस् शब्दवाच्या। न तादृशी सिद्धिः क्वचिदन्यत्र, न वा ततोऽप्यधिका। तथा सिद्ध्या भगवान् स्वगृह एव रमते। तच्च अक्षरात्मकं ब्रह्म इत्यादि।

राधस्—प्राणशक्तिः। दुर्गा—बुद्धिशक्तिः।

शक्तो मया स शम्भुर्भुक्तौ मुक्तौ च (सा शक्तिः) सिसृक्षोराद्य उन्मेषः शक्तिसाम्यात्मकोऽस्य यः। तदुपाधिः शिवः शक्तितत्त्वमित्यभिधीयते। शिवशक्तेः पतिपदार्थे पाशपदार्थे च संग्रहः। परमार्थतः पतिपदार्थ एव शक्तेरन्तर्भावः। पाशत्वं तु तस्याः पाशधर्मानुवर्तनेनोपचारात्। तदुक्तं—"**तासां माहेश्वरीशक्तिः सर्वानुग्राहिका शिवा। धर्मानुवर्तनादेव पाश इत्युपचर्यते॥**"॥ "द्विविधा हि परमेश्वरस्य शक्तिः बन्धकरी

---

१. सुबोधिनी १/१०/२२
२. भागवत सुबोधिनी २/९/।
३. भागवत सुबोधिनी २/९।१
४. तदेव २/५/१२
५. तदेव २/९/१३

मोचिका चेति पुरुष चेतिरोधायिकाविभोः शक्तिः पाशत्वेनाभिहिताचिदनुग्रहहेतोरस्य सिसृक्षोर्य आद्य उन्मेषः तच्छक्तितत्त्वमभिहितमविभागापन्नमस्यैव'' इत्यनुमानेन शक्तिसद्भावसिद्धिः। सेयं परा शक्ति परमेश्वरादभिन्ना तस्य विकारा इच्छाद्याः शक्तयस्तदभिन्ना इति सिसृक्षोः परमेश्वरस्य चिदचिद्विषयो योऽनुग्रहः तद्धेतोस्तत्साधनरूपस्य अस्य बिन्दोर्य आद्य उन्मेषः प्रथम परिणामः— शान्त्यादिभुवनात्मको नादात्मकश्च, तच्छक्ति-तत्त्वमुच्यते। शक्तयः इहास्य करणम्— पराशक्तिविकारा इच्छाद्याः शक्तयः परमेश्वरस्य करणं हस्तादिस्थानीयम्। मायां विक्षोभ्यः शक्तिभिः स्वाभिः मायायाः परतोध्वा शुद्धः शक्तौ निलीयते सकलः। परमात्मनि सापि शिवे तिष्ठत्यविभागमापन्ना। शक्तेर्नादो भवेद् बिन्दुरक्षरं मातृका ततः शक्तिर्मूर्तिस्तस्य हि सा चैका यस्माच्छिवस्य निर्मलत्वेन परमार्थत्वेन बैन्दवादि-देहायोगाच्छक्तिरेव देहकार्यं कुर्वाणोपचारेण मूर्तिरुच्यते मूर्तिमधिष्ठाय हरः पुरुषाणां परहितैकदृक् शम्भुः। कुरुते च भुक्तिमुक्ति-बिन्दुशक्त्याशिवेनैषा नान्येन व्याप्यते शिवः समवेताशिवे बिन्दुरिति तत्राभिधीयते। शक्तिरीशस्य बिन्दोः क्षोभाय वर्तते। शक्तेः प्रेरणाद् घृतकीटन्यायेनैकदेशेन बिन्दुर्विकरोति न तु क्षीरदधिन्यायेन। सर्वात्मा एकैव खलु चिच्छक्तिः शिवस्य समवायिनी, त्रिविधोपाधिसंभेदाल्लयभोगाधिकारिणी। शक्तिलक्षणम् शक्तेरेकदेशेन सर्वात्मा वा परिणामो नास्ति संविदद्वयवादनिरासः शक्तिसंज्ञिता संविदाश्रयते शश्वच्छिवं[1] परमं कारणम्, तद्गोचरा परा मूर्तिरपरा कार्यगोचरा सर्वज्ञानक्रियारूपा शक्तिरेका हि शूलिनः कार्योपाधिवशाच्छक्तिसंज्ञा स्यादपि चिद्घने ''**न तु शक्तिः परापेक्षा वस्तुतोऽस्तीति केचन**'' शिवस्य कर्तुः शक्तिः करणम्। ''न ह्येष भगवान् शक्त्या स्वात्मनोऽत्यन्तभिन्नया। कदाचित् कुरुते किञ्चन्नापि जानाति किञ्चन''। शक्तेर्न स्वतंत्र स्थितिः त्रिधैव शक्तिर्वामाद्या गीता व्यापारभेदतः वामा ज्येष्ठा च रौद्री च शक्तत्रयमतः परम्; रुद्रस्य भगवतः शक्तिर्वामा-ज्येष्ठा च रौद्री चेति। तस्याः शक्तेरधो विद्याविद्येश्वरलक्षण-मेतत् तत्त्वयोर्द्वयं वेदितव्यम्।

''विद्याविद्येशत्वं चोपरिमुक्तिपरेह शिव समता अस्माच्च न्यूनत्वादेषां शक्ति-तत्त्वादधोभावः न तु देशकृतः।

## तन्त्रागमसम्प्रदायोक्तशक्तिलक्षणानि

१. विश्वोत्पत्तौ करणभूता शिवाश्रिता, धर्मिणः शिवस्य धर्मरूपा चिच्छक्तिः। सा च संवित् व्याप्तिरूपिणी, अशेषार्थग्रहणे लम्पटोदया, परमैश्वर्यरूपा महिमा। नित्युक्तत्वादीश्वरस्य सेयादिविषये शक्तिव्यतिरेकेण न बुद्ध्यादिकरणापेक्षा, आलोकादि सहकार्यपेक्षा च, अतः शक्तिरेव तस्य परापेक्षं रूपम्। शिवशक्त्योरात्मभेदाभावेऽपि धर्मिधर्मभेदः सत्यः।

---

१. अष्टप्रकरणम्—पृ० ८ १८८

यत्तु परः शङ्कते यद् धर्मिरूपमेव परमार्थं न तु धर्मरूपा शक्तिः, तन्न। करणेन विना कर्तृत्वादर्शनात्[1]। चिति शक्तिः प्रकाशत्वादसत्त्वाच्च न जायते, न म्रियते, न क्षीयते, न च वर्धते। एषा नित्या अपरिणामिनी[2]।

२. शिवस्य समवायिनी चिच्छक्तिः। ज्ञानक्रियात्मिका, नित्योदिता, निर्विकल्प-स्वरूपिणी। विचित्रकार्योपाधिसम्बन्धान् अपारमार्थिकेन भेदशीलोदयेन युक्ता, कृत्यभेदादधिकारावस्थायां भिन्नेव लक्ष्यमाणा, परानपेक्षा, आद्यन्तरहिता निरतिशया। कर्तृभूतस्य शिवस्य सन्निधौ करणभूतया अनयैव शक्त्या सम्बन्धात् बिन्दुः कार्यमुत्पादयति। सा एषा शिवाश्रया अमोघा शक्तिः ज्ञेयादि कार्योपाधिभेदादिच्छाज्ञानक्रियाद्यनेकरूपा विभाव्यते[3]।

३. शक्तिस्तु शुद्धचिन्मात्रस्फूर्तिदशा[4]। यद्वा परिच्छिन्ननिर्विकल्पकचित्तेरहमिति यद्भासनं तद्भासनसामान्या शक्तिः[5]। उताहो चिदात्मनः स्वपरावभासनेऽन्यानपेक्षणात् स्वातन्त्र्यमुच्यते, एतत् स्वातन्त्र्यमेव शक्तिः[6]।

४. नित्यमुक्ता चिन्त्यप्रमा वा शक्तिसंज्ञिता संवित् शिवं परमकारणमाश्रयेत, स भगवान् तया शक्त्या जडमाक्रम्य सृजति, अवति, हन्ति, तिरोदधाति, आत्मनो अनुगृह्णाति च[7]। एवञ्च—

**मननात्सर्वभावानां त्राणात्संसारसागरात्।**
**मन्त्ररूपा हि तच्छक्तिः मननत्राणधर्मिणी**[8] ॥ इति ॥

५. चिदचिदनुग्रहहेतोः सिसृक्षोरस्य य आद्य उन्मेषः तच्छक्तितत्त्वमस्यैवाविभागापन्नम्[9]।

६. सर्वज्ञानक्रियारूपा शक्तिरेकैव शूलिनः[10]। इति।

सर्वज्ञानक्रियारूपा सैव शक्तिः नित्या, अनेकरूपलक्षमाणा भगवतः कलापिण्डः—शरीरमुपचर्यते इति तेनैव सकलः कथ्यते शिवः[11]।

वस्तुतः शक्तिरियं शिवाभिन्ना सती विश्वसृष्टिमूलभूता उच्यते। शक्तिरेव जगद्रूपं गृहीत्वा प्रादुर्भवति। भोक्तायोग्येषूभावपि शक्तिस्वरूपौ, तयोर्नियामिका च शक्तिरेवास्ति। अखण्डसत्तात्मिकायां शक्तौ बोधः स्वातन्त्र्यञ्चेति अभेदात्मना पिण्डतः। एवञ्च अशेषविश्वसामरस्यात्मा शक्तिः सर्वेषामानन्दकरी शिवावेशहेतुः, शिवेच्छानुगतत्वेन न वर्तमाना भद्राकल्याणिनी तत्स्वभावत्वात् शान्ता निर्विकारा, नित्यमनुग्राहिका च परिभाष्यते। तथा च आनन्देन उल्वणेन हर्षेण वर्तते सानन्दा शक्तिः

१. रत्नत्रय टी. पृ. ९७-९८
२. तदैव पृष्ठ ७२
३. तदैव पृष्ठ ६६-६८
४. त्रिपुरारस्य ज्ञान खण्ड पृष्ठ ५।
५. तदैव पृष्ठ २२६
६. तदैव पृष्ठ २२४
७. रत्नत्रय पृष्ठ ८८
८. तदैव पृष्ठ ९१
९. तत्वप्रकाश पृष्ठ २८
१०. मोक्षकारिका श्लोक २५
११. मोक्षकारिका श्लोक ३६

पराशब्दाभिधेया। शिवोऽपि निःशेषेण महासामरस्य विश्रान्त्यात्मा आनन्दो यस्येति रीत्या निरानन्दः समुदीर्यते। अतएव शिवशक्त्योरभिन्नाद्वैतस्थितिः[१] तान्त्रिकाः संगिरन्ते। तथाहि—शिवादभिन्ना एकैव शक्तिः विमर्श—स्वातन्त्र्य—चितिसंवित्—परा—पादुका इत्यादिभिस्संज्ञाभिः शास्त्रेषु स्मर्यते। शक्तेः संज्ञावाचकशब्दानां रहस्यार्थाः तत्सार्वभौमाखण्डसत्तां व्यञ्जयन्ति। अतएव महार्थमञ्जर्यां महेश्वरानन्देनापि शक्तिविषये प्रोक्तम्—

**"स एव विश्वमेषितुं ज्ञातुं कर्तुं चोन्मुखो भवन्।**
**शक्तिस्वभावः कथितो हृदयत्रिकोणमधुमांसलोल्लासः[२]॥**

स उक्तस्वभावः शिव एव स्वभावः कथितः। तस्यैव किञ्चिदुच्छूनतावस्थायां शक्ति-शब्दव्यपदेश इत्यर्थः। तस्य चायं स्वभावः—यत् स्वहृदयरूपेणेच्छाज्ञानक्रियात्मक-विश्वविकल्पपर्यायकोणत्रयसामरस्य लक्षणेन नित्यप्रवृत्तचर्वणोत्सवत्वादन्तर्मग्र-संविदानन्दस्पन्दसन्धुक्षणक्षमेण अधुना मांसलमत्यन्तवृंहितं परिवाहक्रियाहं महातटा-काम्यः सम्भारकल्पं **"बहुस्यां प्रजायेय"** इत्याम्नायस्थित्या स्वयमेव स्वहृदयोद्य-मवमनोपक्रमात्मानमुल्लासमाह्लादातिशयमनुभवतीति।

अपि च—परमशिवस्य जगतः स्रष्टुमिच्छां परिगृहीतवतः परमेश्वरस्य प्रथम-स्पन्द एवेच्छाशक्तितत्त्वम्, अप्रतिहतेच्छात्वात्[३]।

अयमाशयः—तस्यैव स्वस्वातन्त्र्यमाहात्म्यात् बहिरुल्लिलसिषया परमानन्द—चमत्कारोद्रेकात् अहमिति परामर्श एव शक्तितत्त्वम्।

शैवदर्शने परमशिवस्य विभुत्वे विश्वाकृतित्वे च शक्तिरेव कारणम् इति प्रसङ्गे शक्तिस्वरूपं तन्त्रालोके प्रतिपादितम्—

**एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते[४]।**
**तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः॥**

अस्य खलु एक एवासौ अहं प्रत्यवमर्शाख्यो हि स्वभावभूतो धर्मोऽस्ति यः सर्वविभुत्वादिधर्मजातमाक्षिपेत्। अत्रायमर्थः—अयं हि नाम प्रकाशस्य अहं प्रत्य-वमर्श उच्यते यदयं स्वस्य परस्य वा प्रकाशने परं नापेक्षते इति। अत एवास्य स्वा-तन्त्र्यरूपं तत्तद्देशकालाद्यवभाससहस्रोल्लासनसामर्थ्या स्यात्, येनास्य स्वसमुल्ल-सितोऽपि सङ्कुचितः प्रमातृवर्गः स्वापेक्षया व्यापकत्वनित्यत्वादिना व्यवहरेत्; वस्तुतः पुनरप्यहं प्रत्यवमर्शाख्या स्वातन्त्र्यशक्तिरेवास्यास्ति, येन "स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः" इत्याद्युक्तम्। एवञ्च बहुशक्तित्वेऽपि शक्तिलक्षणे कोऽपि दोषो न आयाति, परमशिवे तच्छक्तियोगितैवास्यानन्तशक्तित्वम्। तदुक्तम्—

**बहुशक्तित्वमप्यस्य तच्छक्त्यैवावियुक्तता[५]॥**

---

१. नेत्रतन्त्र—२१/३४ २. महार्थमञ्जरी—१४
३. परा. प्र. पृष्ठ ६, ७ ४. श्रीतं. १/६७ ५. तदेव १/६८

"या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते॥
एकापि सत्यनेकत्वं यथा गच्छति तच्छृणु॥"

अत्र शक्तिविमर्शे तन्त्रालोककारः वदति—

शक्तिश्च नाम भावस्य स्वं रूपं मातृकल्पितम्[१]।
तेनाद्वय स एवापि शक्तिमत्परिकल्पते॥

यतो भावस्य यस्य कस्यचन सतः पदार्थस्य स्वमेव रूपं फलभेदात् भेदारोपेण शक्तिः इति प्रमातृभिः परिकल्प्यते, न त्वसौ वस्तुतः पदार्थान्तरं किञ्चित्, शक्ति-शक्तिमत्परिकल्पनेऽपि क्रियमाणे, स एव अद्वयमयो विभुः—न काचिदद्वयखण्डना इति यावत्। तदुक्तं—

"फलभेदादारोपितभेदः पदार्थात्मा शक्तिः॥"

प्रकाशपञ्चाशिकायामपि शक्तिलक्षणं यथा—

प्रकाशोऽनन्यतो भावः स्वातन्त्र्योल्लास केवलः।
परिच्छिन्नात्मिका शक्तिः शम्भोर्विश्वातिशायिनः[२]॥

इस स्वतन्त्रशिवाद्वयदर्शने परमेश्वरः स्वतन्त्रः, चिद्घनसंवित्स्वभावः, प्रकाशात्मकः, पूर्णहन्ताचमत्कारमयः सर्वतत्त्वोत्तीर्णः, पञ्चकृत्यविधायी महाप्रकाशवपुः स्वया स्वातन्त्र्याख्या पारमैश्वर्या शक्त्या शिवादि धरण्यन्तः जगदात्मना स्फुरति प्रकाशते च। अत्र परमेश्वरे यः प्रकाशः स खलु विमर्शस्वभावः। विमर्शो नाम—विश्वाकारेण विश्वप्रकाशेन विश्वसंहरणेन च अकृतिमाहम् इति विस्फुरणम्। यदि निर्विमर्शः स्यात् अनीश्वरो जडश्च प्रसज्येत। अत एव जगत्सर्गसंहारादिकार्यादेव परमेश्वरस्य चिन्नाथस्य सामर्थ्यात्मा शक्तिरनुमीयते।

एवञ्च शक्तिमतः परमेश्वरस्य कार्यं परा अद्वितीया शक्तिः सूर्यरश्म्यादिवद-भिन्नैव। तेन शक्तिपरिकल्पनेन परमेश्वरस्य परमाद्वैतस्वरूपरूपसत्तायाः न कापि क्षतिः। अत्र ब्रह्मवादात् स्वातन्त्र्यस्य वैलक्षण्यं वर्तते। अत एव "चितिः" स्वातन्त्र्या विश्वसिद्धिहेतुः[३] इति सूत्रस्य व्याख्याने श्रीक्षेमराजेनोक्तम्—स्वतन्त्रशब्दो ब्रह्मवैल-क्षण्यमाचक्षाणश्चितो माहेश्वर्यं सारतां ब्रूते" इति। ब्रह्मवादे चितेः स्वातन्त्र्यं नास्ति। तत्र चिद्रूपा शक्तिः गुप्ता दृश्यते। तेन ऐश्वर्यमौपाधिकः आगन्तुकश्च स्वीक्रियते। योगदर्शने "चितिशक्तिरपरिणामिनी" इत्युक्तम्। "अमला चितिशक्तिः" इति सर्वसात्ममुनिना प्रोक्तम्। आगमसम्मते चित्स्वरूपे ऐश्वर्यं स्वाभाविकं, न चौपाधिकम्। अत्र चिति देशकालाकारादिभिः नास्ति परिच्छिन्ना, अस्या अवच्छेदकोऽपि न विद्यते, तस्मात् चित्तिरखण्डोच्यते। तदुक्तम्—

---

१. श्रीतं. १/६९
२. षट्त्रिंशतत्वसंदोह—अ. प्र. प. ९
३. षट्त्रिंशतत्त्वसंदोह उ. प्र. प. ९

**देशकालाकारभेदः संविदो न हि युज्यते।**
**तस्मादेकैव पूर्णाहं विमर्शात्मा चिदुच्यते[1] ॥ इति ॥**

अस्मिन्विषये नित्याषोडशिकार्णवे विविधोक्तयः समुपलभ्यन्ते[2]। ताः क्रमेण प्रस्तूयन्ते। तद्यथा—शक्तिमातृका निराचारा परा सूक्ष्मा शक्तिः। चतुष्कलात्मकस्य बिन्दोरवस्था-विशेषा ज्येष्ठारौद्र्यम्बिकाख्या शक्तयः। अकारस्य शिवरूपस्य वामाज्येष्ठारौद्र्यम्बि-काख्याः शक्तयः। हकारस्य शक्तिरूपस्य इच्छाज्ञानक्रियाशान्ताख्याः शक्तयः। शक्तिर्नादः। स्वाभिमुखाग्रत्रिकोणपरम्परायाः शक्तिसंज्ञात्वम्। विमर्शरूपा शक्तिरीका-रोपलक्षिता। तत्त्वात्मिका शक्तिः। शक्तिर्योनिः। उद्रेकः शक्तिः। रक्तो बिन्दुः शक्तिः।

**वेदादिशक्तिरजपः परमात्ममहामनुः।**
**वह्नेर्जाया च कथिताः पञ्चमन्त्रा शुभावहाः[3] ॥**

वेदादि-प्रणवः। अजपा-हंसः। परमात्ममहामनुः—सोऽहं, वह्नेर्ज्जायास्वाहा। प्रणवो बीजं हृल्लेखा शक्तिः। शुभावहा इत्यनेनास्य स्वातंन्त्र्यमप्युक्तम्। यदाहुः—"स्वतंत्रोऽपि जपात्सिद्धिंकुर्यादष्टाक्षरो मनुः। तस्माद्यथावत् प्रजपेद्धीमान् मोक्षपरः पुमान्" इति। साम्प्रदायिका वाग्भवहृल्लेखा सम्पुटमाहुः।

## कोशदृष्ट्या शक्तिपदार्थः

शक्तिः, स्त्री, "शक् + क्तिन्" कायजननसामर्थ्यम्। यथा—

**"या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता"**

इति देवीमाहात्म्यस्य टीकायां नागोजिभट्टः। शक्यते नेतुमनया। सा प्रभावोत्साहमन्त्रजभेदत्रिविधा। तत्र प्रभुत्वे साधकत्वात् कोषदण्डौ प्रभुशक्तिः (१) विक्रमेण स्वशक्त्या विस्फुरणमुत्साहशक्तिः (२) सन्ध्यादीनां समादीनाञ्च यथावस्थानं मन्त्रशक्तिः-(३)- सामर्थ्यमात्रम्। तत्पर्य्यायः १ द्रविणम् २ तरः ३ सहः ४ बलम् ५ शौर्य्यम्, ६ स्थामः ७ शुभम् ८ पराक्रमः ९ प्राणः इत्यमरः। शुभं ११ सहम् १२। इति शब्दरत्नावली। ऊर्ज्जः १२ इति जटाधरः "कासूः" सा तु सर्व्वलानामास्त्रम्। इति नानार्थे अमरः भरतो गौरो इति मेदिनी। लक्ष्मीः इति शब्दमाला। त्रिशक्तयो यथा—

**एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी।**
**एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ॥**
**एषैव रक्ता रजसि वैष्णवी परिकीर्तिता।**
**एषैव कृष्णा तमसी रौद्री देवी प्रकीर्तिता ॥**

---

१. तदेव

२. नित्याषोडशिकार्णव—प्र. सं. २९-३१, ३५, २०७-२०८, ३६, ५०, १९१, १९५, २०९, ३०९, २३१, ३०८, ३६२

३. श्रीशारदातिलकम्—६/६२

एषैव कृष्णा तमसी रौद्री देवी प्रकीर्तिता।
परमात्मा यथा देवी एक एव त्रिधा स्थितः॥
प्रयोजनवशाच्छक्तिरेकैव त्रिविधा भवेत्॥

अपि च—

"बिन्दुशिवात्मकस्त्वबीजशक्त्यात्मकं स्मृतम्। तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः।" इति क्रियासारः। गोरक्षसंहितायामपि शक्तेस्त्रैविध्यं प्रतिपादितम्। तथाहि—

"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी।
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति॥"

ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे बाणयुद्धंनाम ११९ अध्याये अष्टशक्तयो यथा—

"इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्मवादिनी।
कौमारी नारसिंही च वाराही विकटाकृतिः॥
माहेश्वरी महामाया भैरवी भीमरूपिणी।
अष्टौ च शक्तयः सर्व्वा रथस्थाः प्रयमुर्मुदा॥"

इति ब्रह्मवैवर्ते एव प्रकृतिखण्डे ६१ अध्याये नवशक्तयो यथा—

तत्र पद्मे चाष्टदले मध्ये च भक्तिपूर्वकम्।
वैष्णवीश्चैव ब्रह्माणी रौद्री माहेश्वरी तथा॥
नारसिंहीश्च वाराहीमिन्द्राणीं कार्तिकीं तथा।
सर्वशक्तिस्वरूपाञ्च प्रधानां सर्वमङ्गलाम्॥
नवशक्तीञ्च सम्पूज्य घटे देवाञ्च पूजयेत्॥

पञ्चाशद्विष्णुशक्तयो यथा—

कीर्ति कान्तिस्तुष्टिपुष्टी धृतिः शान्तिः क्रिया दया।
मेधा सहर्षा श्रद्धा स्याल्लज्जा लक्ष्मी सरस्वती॥
प्रीति रती रमा प्रोक्ता क्रमेण स्वरशक्तयः।
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी॥
विरजा विजया विश्वा विनदा सुनदा स्मृतिः।
ऋद्धिः समृद्धिः शुद्धिश्च भक्तिर्मुक्तिर्मतिः क्षमा।
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा॥
अमोघा विद्युता चेति शक्तयः सर्वकामदाः।
एताः प्रियतमाङ्केषु निषण्णाः सस्मिताननाः॥
विद्युद्दामसमानाञ्च पङ्कजाभयवाहनः॥

प्रपञ्चसारे पञ्चाशद्रुद्रशक्तयो यथा—

गुणोदरी स्याद्विरजा शाल्मली तदनन्तरम्।
लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा समीरिता॥
सदीर्घमुखी गोमुख्यौ दीर्घजिह्वा तथैव च।
कुण्डोदर्य्यर्द्धकेश्यौ च तथा विकृतमुखी ततः।
सुश्रीमुखी चैव विद्यान्मुख्यैताः स्वरशक्तयः॥
महाकालीसरस्वत्यौ सर्वसिद्धिः समन्विते।
गौरी त्रैलोक्यविद्यास्यान्मन्त्रसिद्धिस्ततः परम्॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता।
द्रावणी नागरी भूयः खेचरी चापि मञ्जरी॥
रूपिणी चित्रिणी पश्चात् काकोदर्य्यपि पूतना।
स्याद्भद्रकाली योगिन्यौ शङ्खिनी गर्ज्जिनी तथा॥
कालरात्रिश्च कुब्जिन्या कपर्द्दिन्यपि वज्रया।
जया च सुमुखेश्वर्य्या रेवती माधवी ततः॥
वारुणी वार्षवी प्रोक्ता पश्चाद्रक्षो विदारिणी।
ततश्च सहजा लक्ष्मीर्व्यापिनी माययान्विता॥
एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः।
रक्तोत्पलकपालाभ्यामलंकृत कराम्बुजाः॥

रेवतीतन्त्रे तृतीयपटले कुलशक्तयो यथा—

शक्तयः परमेशानि! विदग्धाः सर्वयोषितः।
नटी कापालिकी वेश्या मालिनी कुङ्कुमालिनी॥
चाण्डाली च कुलाली च रजकी नापिताङ्गना।
गोपिनी योगिनी शूद्रा ब्राह्मणी राजकन्यका॥
कोचाङ्गना च देवेशि! तथैव शङ्खकारिणी।
एताः षड्विंशतिः कन्या देवानामपि दुर्लभाः।
दैवज्ञा व्याघ्रवामा च तथा मांसापहारिणी॥
बौद्धा च जवनी देवि तथा रसपसारिणी।
वैश्या चतुर्विधा प्रोक्ता द्विविधा कुङ्कुमालिनी।
धीवरी द्विविधा प्रोक्ता तथैव गणिकाङ्गना।
कुम्भकारी द्विधा प्रोक्ता तथैव गोपिनी स्मृता।
वाता वैद्याङ्गना देवि जवनी द्विविधा स्मृता॥
बौद्धकन्या त्रिधा देवि तथा कोचाङ्गना प्रिया।
पूर्वोक्ताभिः सहैकत्र चतुःषष्टिश्च शक्तयः॥

एवमेव गुप्तसाधनतन्त्रे प्रथमपटलेऽपि—

पञ्चाचारेण देवेशि! कुलशक्तिं प्रपूजयेत्।
जटी कापालिकी वेश्या रजकी नापिताङ्गना॥
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका।
मालाकारस्य कन्या च नव कन्याः प्रकीर्तिताः॥
विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः।
रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी।
पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्ध्रुवम्॥

शक्तेः प्रशंसायां शक्तिकामसर्वस्वेऽपि निगदितम्; तथाहि—

शक्तिं विना महेशानि! सदाहं शवरूपकः।
शक्तियुक्तो यदा देवि! शिवोऽहं सर्वकामदः॥
शक्तियुक्तं जपेन्मन्त्रं न मंत्रं केवलं जपेत्।
सावित्री सहितो ब्रह्मा सिद्धोऽभून्नगनन्दिनी॥
द्वारवत्यां कृष्णदेवः सिद्धोऽभूत् सत्यया सह।
तथाकोच वधूसङ्गान्मम सिद्धिर्वरानने॥
ईश्वरोऽहं महादेवि! केवलं शक्तियोगतः।
शक्तियोगेन देवेशि! यदि सिद्धिर्न जायते॥
तदैव परमेशानि मम वाक्यं वृथा भवेत्।
यद्दत्तं जलगण्डूषं शक्तिवक्त्रे सुरेश्वरि॥
सिन्धुरूपं महेशानि! तज्जलं नात्र संशयः।
स्वीयेष्टदेवीभावेन भोजयेताञ्च यत्नतः॥
शक्तिश्च कथ्यते देवि शृणुष्व सुरसुन्दरि॥
त्रयोदशाब्दादूर्ध्वं वा पञ्चविंशति वार्षिकी॥
अप्रसूता विशेषेण प्रसूता वा प्रसूतिका॥
अवश्यं पञ्चमं कुर्यात् शक्तिमात्रे महेश्वरि॥''

तस्याः उत्पत्तिमाहात्म्यादि ब्रह्मवैवर्तपुराणे गणेशखण्डे सप्तमाध्याये यथा—

सह बुद्ध्या बुद्धिमन्तो न वक्तुमुचितं सुराः।
सर्वे शक्त्यालया विश्वे शक्तिमन्तो हि जीविनः॥
ब्रह्मादितृणपर्य्यन्तं सर्वं प्राकृतिकं जगत्।
सत्यं नित्यं विना माञ्च मया शक्तिः प्रकाशिता॥
आविर्भूता च सा मत्तः सृष्टौ देवी मदीच्छया।
तिरोहिता च सा शेषे सृष्टिसंहरणे मयि॥
सृष्टिकर्त्री च प्रकृतिः सर्वेषां जननी परा।
मम तुल्या च मन्माया तेन नारायणी स्मृता॥

सुचिरञ्च तपस्तप्तं शम्भुना ध्यायता च माम्॥
तेन तस्मै मया दत्ता तपसां फलरूपिणी॥
व्रतञ्च लोकशिक्षार्थमस्या न स्वार्थमेव च।
स्वयं व्रतानां तपसां फलदात्री जगत्त्रये॥
मायामोहिताः सर्वे किमस्या वास्तवं व्रतम्।
साध्यमस्या व्रतफलं कल्पे कल्पे पुनः पुनः॥
सुरेश्वरा यदंशाश्च ब्रह्माविष्णुमहेश्वराः।
कलाः कलांशरूपास्ते जीविनश्च सुरादयः॥
मृदा विना कुलालश्च घटं कर्त्तुं यथाक्षमः।
विना स्वर्णं स्वर्णकारः कुण्डलं कर्तुमक्षमः॥
विना शक्त्या तवाहञ्च स्वसृष्टिं कर्त्तुमक्षमः।
शक्तिप्रधाना सृष्टिश्च सर्वदर्शनसम्मता॥
अहमात्मा च निर्लिप्तोऽदृश्यः साक्षी देहिनाम्।
देहाः प्राकृतिकाः सर्व्वे नश्वराः पाञ्चभौतिकाः॥
अहं नित्यशरीरी च भानुविग्रहविग्रहः॥
सर्व्वाधारा च प्रकृतिः सर्व्वात्माहं जगत्सु च॥
अहमात्मा मनो ब्रह्मा ज्ञानरूपो महेश्वरः।
पञ्चप्राणाः स्वयं विष्णुर्बुद्धिः प्रकृतिरीश्वरी॥
शक्तयो निद्रादयश्चैताः सर्वाश्च प्रकृते कलाः।
सा च शैलेन्द्रकन्येयमिति वेदनिरूपितम्॥

एवमेव तत्रैव चत्वारिंशदध्यायेऽपि—

सा शक्तिः सृष्टिकाले च पञ्चधा चेश्वरेच्छया।
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती॥
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः।
प्राणाधिकप्रियतमा सा राधा परिकीर्तिता॥
ऐश्वर्य्याधिष्ठातृदेवी सर्वमङ्गलकारिणी।
परमानन्दरूपा च सा लक्ष्मी परिकीर्तिता॥
विद्याधिष्ठातृदेवी या परमेशस्य दुर्लभा।
वेदशास्त्रयोगमाता सा सावित्री परिकीर्तिता॥
बुध्यधिष्ठातृदेवी या सर्वशक्तिस्वरूपिणी।
सर्वज्ञानात्मिका सर्वा सा दुर्गा दुर्गनाशिनी॥
रागाधिष्ठातृदेवी या शास्त्रज्ञानप्रदा सदा।
कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती॥

ततस्तया सह महिषासुरस्य घोरतरं समरमभूत्। तस्मिन् युद्धे ससैन्यो महिषासुरः पराजितोऽभूत्। ततः खड्गच्छिन्नमहिषशीर्षादर्धनिष्क्रान्तं महिषासुरं देवी नागपाशेन बद्ध्वा स्वपादतले वामपादाङ्गुष्ठेन निपीड़ितवती। तेन च तस्य दिव्यज्ञानमभवत्। स तदा चिरकालं तद्रूपेणैव देवीं भोगो मोक्षश्चेति वरद्वयमयाचत। तदुक्तं कालिकापुराणे (६० तमाध्याये)—

**यज्ञभागमहं भोक्तुमिच्छामि त्वत्प्रसादतः।**
**यथा मखेषु सर्वेषु पूज्योऽहं स्यां तथा कुरु॥**
**त्वत्पादमेवं न त्यक्ष्ये यावत्सूर्यः प्रवर्तते।**
**एवं वरद्वयं देहि यदि देयो वरो मम॥**

महिषासुरो भगवतीमवदत्—हे देवि! त्वदनुकम्पयाऽहं यज्ञभागभोगमिच्छामि। अतएव निखिलयज्ञेषु यथा पूज्योऽहं स्यां, तद्विधीयताम्। किन्तु सवितरि विद्यमाने नाहं त्वत्पादपद्मं त्यक्ष्ये। यदि वाऽपि वरो देयस्तया मह्यं महेश्वरि। भोगमोक्षवरद्वयं देहि मे परमेश्वरि॥

विष्णुपुराणे देव्युवाच—

**यज्ञभागाः सुरेभ्यस्तु कल्पिता वै पृथक् पृथक्।**
**भोगो न विद्यते चान्यो यं दास्यामि तवाधुना॥**
**किन्तु त्वयि मया युद्धे निहते महिषासुरे।**
**नैव त्यक्ष्यसि मत्पादं सततं नात्र संशयः॥**
**मम प्रवर्तते पूजा यत्र यत्र च तत्र ते।**
**पूज्यश्चिन्त्यश्च तत्रैव कायो यत्तव दानव॥**

देवी महिषासुर-प्रार्थनां श्रुत्वा कृपया "भक्तवत्सला" महिषासुरं सम्बोध्याह, "हे महिषासुर! पुरा देवेभ्यो यज्ञभागं प्रत्येकं पृथक् पृथक् प्रदत्तम्। साम्प्रतं न चान्यो विद्यते यज्ञभागो यत्तुभ्यं दद्याम्। किन्तु मया त्वयि युद्धे निहतेऽपि त्वं मत्पादं सततं न त्यक्ष्यसीति मे नात्र सन्देहः। हे दानव! यत्र यत्र मे पूजा भविष्यति, तत्र तत्रैव तवैतच्छरीरस्यापि पूजा भविष्यतीति। तदुक्तं सप्तशतीमन्त्रस्य शक्रादिस्तुतौ—

देवा ऊचुः—

**केनोपमा भवतु तेऽस्य पराक्रमस्य रूपञ्च शत्रुभयकार्यतिहारि कुत्र।**
**चित्ते कृपा समरनिष्ठुरता च दृष्टा त्वय्येव देवि वरदे भुवनत्रयेऽपि॥**

हे देवि! तवैतत्पराक्रमस्य तुलना न केनापि सह भवितुमर्हति। परन्तु तव शत्रुभीतिजनकमपि रूपमतीव मनोहरम्। तदपि न कुत्रापि सम्भवति। हे वरदे! तव हृदि मुक्तिप्रदा कृपा, समरे मृत्युप्रदा निष्ठुरता, केवलं त्रिभुवने विरुद्धधर्मद्वयमेकाधारे त्वय्येव दृश्यते। अत एवोक्तम्—

**यत्रास्ति भोगो न च तत्र मोक्षः, यत्रास्ति मोक्षो न च तत्र भोगः।**
**शिवा पदाम्भोजयुगार्चकानां, भोगश्च मोक्षश्च करस्थ एव॥ इति॥**

## बौद्धधर्मे शक्तिवादरहस्यम्

बौद्धधर्मे पञ्चध्यानिबुद्धानां शक्ति-नामानि लोचना-यामकी-पाण्डवा-वज्रधात्रीश्चेति कथ्यन्ते। हिन्दुतन्त्रे यथा वामाचारो दक्षिणाचारश्चेति भागद्वयमस्ति, तद्वद् बौद्धतन्त्रेऽपि क्रियातन्त्र-योगतन्त्र-चर्यातन्त्रेति भागत्रयं विद्यते। बौद्धतन्त्रमतेन चतुरशीतिसङ्ख्यकसिद्धपुरुषनामानि परिदृश्यन्ते। कल्पतन्त्रसमाजतन्त्रनामकं तन्त्र-द्वयमतिप्राचीनतमं बौद्धतन्त्रम्। हिन्दुतन्त्रे यथा आगम-यामलञ्चेति भेदेन भागद्वय-मस्ति, तथैव बौद्धतन्त्रेऽपि वज्रयानं सहजयानं कालचक्रयानञ्चेति भागत्रयं विद्यते। "साधनमाला" नामकबौद्धतन्त्रे महासरस्वती, वज्रवीणा सरस्वती, वज्रसारदा, आर्यसरस्वती च तत्रैवोक्तध्यानविशेषयोगेनाराध्यन्ते। बौद्धधर्मस्य मरीचिदेवी दशभुजाः, मूर्तिभेदेन द्विभुजा, चतुर्भुजा, द्वादशभुजा चेति। तिब्बतीयमालामादयो मरीचिदेवीम् "उषा" देवीरूपेणाराधयामासुः। तेषां तारादेव्याः पूजाविशेषो वैशिष्ट्यपूर्णो दृश्यते। एवं बौद्धधर्मेऽपि शक्तेः प्राधान्यमस्तीति परिलक्ष्यते।

## जैनधर्मे शक्तिवादरहस्यम्

जैनश्रमणेषु शक्तिपूजायाः शाक्ततन्त्राणामपि च प्रधानं स्थानं विद्योतते। यद्यपि तत्र बाह्याचार-कुलाचार-समयाचारसदृशानां मध्ये केषामप्याचाराणां परम्परा न प्रतीयते, तथापि प्रणव-मायाबीज-कामनाबीजानामुपासनाभिः सह वर्णमय्या देवतायास्तीर्थङ्कराणां शासनदेवतानां चक्रैश्वर्यजितादुरितारिकालिकावैरोट्याप्रभृतीनां सरस्वत्याश्च, षोडशविद्याव्यूहरूपेण रोहिणीप्रज्ञासिशृङ्खलादिदेवीनामुपासना सुप्रचलिता विद्यते। अथ च सनातनधर्मावलम्बिषु श्रीविद्योपासना, बौद्धेषु च तारादेव्युपासना यथा विशिष्टमहिमानं धारयतस्तथैव जैनेषु शाक्तसम्प्रदायानुकूल्येनैव श्रीपद्मावतीदेव्या उपासनाऽतीव बुद्धिमती दृश्यते। पद्मावत्या अनेके प्रयोगा यत्र तत्र तन्त्रग्रन्थेषु वयं विलोकयामः। तथाहि रक्तपद्मावती, शैवागमोक्तपद्मावती, हंसपद्मावती, सरस्वती-पद्मावती, सबरी-पद्मावती, कामेश्वरी-पद्मावती, भैरवी-पद्मावती, त्रिपुरा-पद्मावती, नित्या-पद्मावती, महामोहिनी-पद्मावती, पुत्रकर-पद्मावती, कज्जलावतार-पद्मावती, घटावतारपद्मावती, दीपावतारपद्मावतीति च कर्मणां सिद्धयेऽपि तत्तन्नामसंयोजनपुरः-सरं पद्मावत्याः मन्त्राणामुपलब्धिः सुगमैव। जैनधर्मानुयायिनः शक्तिपूजायां पूर्णतया विश्वासभाजो विलोक्यन्ते। अन्तःशाक्ताः बहिःशैवा इत्यस्य स्थाने "अन्तःशाक्ताः बहिर्जैना" इत्येवमुक्तिश्च चरितार्थतया संगच्छेते। इदमत्र परं वैशिष्ट्यं यदत्र जैन सम्प्रदायस्याहिंसाप्रधानत्वात् कोऽपि वामाचार-वज्रयानसदृशः पन्थाः पृथङ् न प्रचलितः। सेयं शक्त्युपासना जनेषु विशुद्धेन स्वरूपेणात्मयोगमार्गं पोषयन्ती

शक्तियुक्तात्मभावानां विधानं पुरस्करोति। आचार्यश्रीहेमचन्द्रः स्वकीये योगशास्त्रे सप्तमाष्टमप्रकाशयोर्धर्मध्यानप्रसङ्गे ''पदस्थ'' नामके ध्याने षट्चक्रवेधपद्धत्यनुसारं वर्णमय्या देवतायाश्चिन्तनं स्मारयति। तदुक्तम्—

क्षीराम्भोधे विनिर्यान्तीं प्लावयन्तीं सुधाम्बुभिः।
भाले शशिकलां ध्यायेत् सिद्धिसोपानपद्धतिम्॥

अतो जैनधर्मेऽपि शक्तेः प्राधान्यं स्वीकृतम्।

## आगमे शक्तिवादनिरुक्तिः

मुण्डमालातन्त्रे—

विना तन्त्राद्विना मन्त्राद्विना यन्त्रान्महेश्वरि।
न च भुक्तिश्च मुक्तिश्च जायते वरवर्णिनि॥
शक्तिमार्गं परित्यज्य योऽन्यमार्गे प्रधावति।
करस्थं स मणिं त्यक्त्वा भूतिभारं प्रधावति॥
नानातन्त्रमतं देवि नानायन्त्रं प्रकाशितम्।
ब्रह्मस्वरूपं विज्ञातुं कः समर्थो महीतले॥
नानामार्गे प्रधावन्ति पशवो हतबुद्धयः।
श्रीदुर्गाचरणाम्भोजं हित्वा यान्ति रसातलम्॥
सत्यं वच्मि हितं वच्मि पथ्यं वच्मि पुनः पुनः।
न च भुक्तिश्च मुक्तिश्च विना दुर्गानिषेवनात्॥

मत्स्यसूक्ततन्त्रे—

विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिर्यथा।
नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः॥
अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः।
देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणा यथा॥
तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुपमम्॥

कुब्जिकातन्त्रे—

श्रुतिस्मृतिविधानेन पूजा कार्या युगत्रये।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः॥
नहि देवाः प्रसीदन्ति कलौ चान्यविधानतः॥

पुरश्चरणोल्लासतन्त्रे—

तन्त्रोक्तं ध्यानमन्त्रञ्च प्रशस्तं भारते कलौ।
वेदोक्तञ्चैव स्मृत्युक्तं पुराणोक्तं वरानने।
न शस्तं चपलापाङ्गि कदाचिद्भारते कलौ॥

महानिर्वाणतन्त्रे—

विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये।
श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे॥
कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्तते।
न तस्य गतिरस्तीति सत्यं सत्यं न संशयः॥
कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः।
शस्ताः कर्मसु सर्वेषु जपयज्ञक्रियादिषु॥
निर्वीर्याः श्रौतजातीया विषहीनोरगा इव।
सत्यादौ सफला आसन् कलौ ते मृतका इव॥
नान्यः पन्था मुक्तिहेतुरिहामुत्र सुखाप्तये।
यथा तन्त्रोदिता मार्गा मोक्षाय च सुखाय च॥

शक्तेरेव योगमायारूपाया महत्वं देवीभागवतेऽपि परिकीर्तितं यथा—

किं ब्रवीमि महाराज योगमायाबलं महत्।
यया विश्वमिदं सर्वं भ्रामितं भ्रमते किल॥
एवं नानावतारेऽत्र विष्णुः शापवशं गतः।
करोति विविधाश्चेष्टा देव्यधीनः सदैव हि॥
जानीहि त्वं महाराज योगमायावशे जगत्।
ब्रह्मादिस्तम्बपर्यन्तं देवमानुषतिर्यगम्॥
मायातन्त्रीनिबद्धा ये ब्रह्माविष्णुहरादयः।
भ्रमन्ति बन्धमायान्ति लीलया चोर्णनाभवत्॥

अतएव सर्वधर्मेषु वेदादिशास्त्रसमूहैर्देवमुनिमहर्षिभिश्च प्रोक्तं यत्—

शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम्।
इच्छया संहरत्येषा जगदेतच्चराचरम्॥
एवं सर्वगता शक्तिः सा ''ब्रह्मे''ति विविच्यते।
सोपास्या विविधैः सम्यग् विचार्य सुधिया सदा॥

इत्यादिशास्त्रयुक्तिभिः शक्तिर्ब्रह्मेति मूलतत्त्वम्।

## आचार्यशङ्करनये शक्तिस्वरूपम्

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥

शिवः परमात्मा यदि शक्त्या युक्तो भवति तर्हि प्रभवितुं जगत्सर्जनादौ शक्तः शक्नोति। यदि न चेत्, शक्त्या युक्तो न चेत् तर्हि स्पन्दितुं नेत्रोन्मिलनेऽपि चलितुमपि

न कुशलः खलु समर्थो न भवति। अर्थात् शिवोऽपि शक्तिविरहितः सन् सर्वकर्मसु अशक्तो भवति। अस्मात् कारणात् हरिहरविरंच्यादिभिरपि हरिः विष्णुः हरः शिवः विरंचिर्ब्रह्मा आदिशब्देन इन्द्रादयो देवाः तैः आराध्यां आराद्धुं योग्यां त्वां प्रणतुं स्तोतुं वा प्रभवितुं अकृतपुण्यः अल्पपुण्यो मनुष्यः मादृशो वा कथं समर्थो भवति, अपितु नैव भवतीति।

अर्थात् ऐंकाररूपिणीं विष्णुः ह्रींकाररूपिणीं हरः क्लींकाररूपिणीं ब्रह्मा त्वामाराधयित्वा तत्तद्रूपेण त्वामन्यो भूत्वा स्वस्वकार्यक्षमा भवन्ति।

शिवः अकारः शक्त्याः युक्तः संपुटितः शक्तिः सानुस्वारः एकारः एवं हि वाग्भवं बीजं ऐं भवति। सर्वोत्तमो जगद्बीजमयो हकारः शक्तिः सानुस्वारः, इकारः, सरेफः ककारः रमाबीजं कामराजबीजं एवं ह्रीं क्लीं इति सम्भवति। कामराजबीजेन विरंचिः जगत्सृष्टये आराधयामास। वाग्भवेन हरिःपालनशक्तये आराधयामास। हरः ह्रींकारेण तमोमयेन जगत्प्रलयाय आराधयामास। तदुक्तं मंत्रावल्यां—

**वाणी हरः स्मरो ब्रह्मा माया रुद्रसनातनः।**

मंत्र—

**ॐ ऐं ह्रीं क्लीं शिवे हरिहरविरंच्याद्याराधिते शिवशक्तिस्वरूपे स्वाहा।**

अस्य पुरश्चरणं सपादलक्षजपात्मकम्, ध्यानं चेत्थम्—

**बालार्ककिरणाभासां चन्द्ररेखाविभूषितां बिम्बाधरलसद्दंततेजोमंडलमण्डितां।**
**सर्वार्तिशमनीमीशां सर्वसम्पद्विवर्धिनीं पद्मपत्रारुणनखां दीर्घकुंचितमूर्द्धजां॥**
**स्मृतां ब्रह्मादिभिर्देवैः ध्याये सुगीतसदागुणां चतुर्विंशतितत्त्वैस्तु बद्धहस्तैरुपासिताम्[1]॥**

**( सकलसिद्धिः )**

## गीतायां भागवते च प्रकृतितत्त्वम्

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः[2]।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः॥**

उपद्रष्टेति। प्रकृतिपुरुषयोः पंग्वन्धवदतिकलान्योन्यापेक्षावृत्तिः। अत एवास्य शास्त्रकृद्भिर्नानाकारैर्नामभिरभिधीयते रूपमुपद्रष्टेत्यादिभिः। अयमत्र तात्पर्यार्थः प्रकृतिस्तद्विकारः चतुर्दशविधः सर्गः। तथा पुरुषः एतत्सर्वमनादिरनित्यं च, ब्रह्म-तत्त्वाच्छुरितत्वे सति तदनन्यत्वात्। भागवते चापि तथैव व्याख्यातम्—

**भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥**

१. सौ. लहरी त्रि. टी.

२. श्रीमद्भगवद्गीता १३/२२, श्रीमच्छाङ्करभाष्येण (आनन्दगिरिकृत व्या० युजा संवलिता) अनिभवगुप्ताचार्य व्याख्या

**अपरिमेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत्[१]॥**

अस्य च वस्तुनः सर्वो न योग्य इत्यनेन दुर्लभत्वाद्यत्नः सेव्यतामित्याह—भूमिरिति। अपरिमेयमिति प्रत्यक्षेण या संसारावस्थायां सर्वजनपरिदृश्यमाना सा चैकैव सती प्रकाराष्टकेन भिद्यत इति एक एव प्रकृत्यारब्धत्वादेकमेव विश्वमिति प्रकृतिवादेऽप्यद्वैतं प्रदर्शितम्। सैवं जीवत्वं पुरुषत्वं प्राप्ता परा। सापि ममैव नान्यस्य च सोभयरूपा वेद्यवेदकात्मकप्रपञ्चोपरचनविचित्रा। तत एव स्वात्मविमलमुकुरतल-कलितसकलभावभूमिः स्वभावात्मिका सततमव्यभिचारिणी प्रकृतिः। सोऽह-मित्यनेन प्रकृतिपुरुषपुरुषोत्तमेभ्यो व्यतिरिक्तोऽपीश्वरः सर्वथा सर्वानुगतत्वेन स्थित इति। साङ्ख्ययोगयोर्नास्ति भेदवाद इति प्रदर्शितम्। इदं जगद्भूम्यादि।

उक्तञ्च परमानन्दतन्त्रे—

**प्रपञ्चवासनारूपा शक्तिरित्यभिधीयते।**
**निष्प्रपञ्चः चिदेकात्मा शिवतत्त्वं समीरितम्॥**

शिवस्य विश्वसिसृक्षा शक्तिः ''शक्तितत्त्व''मिति नाम्ना ख्यातेति रामेश्वरः परशुरामकल्पसूत्रटीकायामवदत्—

''निर्गुण एव शिवो यो ''बहुस्यां प्रजायेय'' इतीच्छाशक्त्या युक्तः सृष्ट्युन्मुखः स एव शिवः शक्तिपदवाच्योऽभवत्।''

''प्रकाशो विमर्शः'' त्रिकसिद्धान्तमते परमशिवस्य परमेश्वरस्य वा हृदये सिसृक्षाविर्भावमात्रं तस्य रूपद्वयमभवत्—विश्वरूपं शक्तिरूपञ्च, तत्र शिवःप्रकाश-रूपी, शक्तिविमर्शरूपिणी। विमर्शशब्दार्थः पूर्णोऽहं कृत्रिमोऽहमित्यस्य स्फूर्तिः। स्फूर्तिरियं सृष्टिकाले विश्वाकारा, स्थितिकाले विश्वप्रकाशा, प्रलयकाले च विश्व-संहरणरूपा अभवत्। ''विमर्शो'' नाम विश्वाकारेण, विश्वप्रकाशेन, विश्वसंहारेण चाकृत्रिमाहमिति स्फुरणम् (परा-प्रवेशिका)। विमर्शशक्तेरपरनामानि, चित्-चैतन्यम्, संवित्, स्वर-मोदिता, परावाक् स्वातन्त्र्या, परमात्मनि मुख्यैश्वर्या, कर्तृत्वम्, स्फुरत्ता, शारा, स्पन्द इत्यादीनि।

[२]प्रमाया रूपद्वयम्—अहमंश इदमंशश्चेति। अहमंशग्राहकः शिवः प्रकाशो वा, इदमंशग्राहकः शक्तिः विमर्शो वा। विमर्शेन प्रकाशानुभावो जायते, प्रकाशस्थितौ च विमर्शस्य कल्पना सम्भवति। यथा दर्पणं विना मुखमण्डलस्य रूपं प्रत्यक्षं न भवति, तथैव विमर्शं विना प्रकाशस्य स्वरूपमपि न सम्भवति। मधुनि मिष्टत्वं नित्यं किन्तु मधु स्वमिष्टत्वग्रहणेऽसमर्थमेव। एवञ्च शक्तिं विना शिवस्य स्वीयप्रकाश-रूपज्ञानं न भवति।

---

१. श्रीमद्भगवतगीता ७/४/५
२. शाक्तदर्शनम्।

पुण्यानन्दस्तदीये ''कामकलाविलास'' ग्रन्थे आद्याशक्तिं ''शिवरूपविमर्श-निर्मलादर्शत्वेन'' वर्णयंस्तस्याः स्वरूपस्य सुन्दरपरिचयमदात्। यथा कोऽपि राजा निर्मलदर्पणे स्वप्रतिबिम्बं दृष्ट्वा निजमुखसौन्दर्यं सम्यग् जानाति, तथा शिवोऽपि स्वाधीनभूतामात्मशक्तिं दृष्ट्वा स्वीय-परिपूर्णाहन्ताप्रकाशमयस्वरूपं जानाति। अतएव ''प्रकाशो'' विमर्शात्मकः ''विमर्श''श्च प्रकाशात्मकः। अतएव शिवः शक्तिं विना स्थातुं न शक्नोति। शक्तिरपि शिवं विना स्थातुं न शक्नोति। उक्तञ्च—

**न शिवेन विना देवी न देव्या च विना शिवः।**
**नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव॥**

तथाहि, यद्वच्चन्द्रज्योत्स्नयोः पार्थक्यं नास्ति, तद्वच्छिवशक्त्योरपि किमपि पार्थक्यं नास्ति। उक्तञ्च सोमानन्दकृतशिवदृष्टौ—

**न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।**
**शिवः शक्तस्तथा भगवानिच्छया कर्तुमीहते॥**
**शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते॥ ३/२/३**

श्रीशङ्कराचार्योऽप्याह—

**शिवः शक्त्याद्युक्तो यदि भवति भक्तः प्रभवितुं।**
**नो च देवं देवो न खलु कुशलः स्पन्दितुमपि॥**

॥ इति शम्॥



# तृतीयोऽध्यायः
# अवस्थाभेदात् कार्यभेदाच्च शक्तेः नामार्थानुशीलनम्

---

## शक्तिस्वरूपाणि

**पराशक्तिः**

परैव हि अनाख्या भगवती संविद् स्वस्वातंत्र्यात् स्वात्मनि सृष्ट्यादि अवभासयति विलापयति च।

**लोलीभूता परा स्थितिः[१]॥**

**नौमि चित्प्रतिभं देवीं परां भैरवयोगिनीम्।**
**मातृमानप्रमेयां शूलाम्बुजकृतास्पदाम्॥**

"परा" पूर्णा, अतएव भिन्नमपि जगत्स्वात्मनि अभेदरूपतया पालयन्ती अनन्योन्मुखतया च प्रकृष्टाम्।

**"या सा शक्तिर्जगद्धातुः कथिता समवायिनी।**

इत्याद्युक्त्या "भैरवयोगिनी" नित्यमेव परप्रमातृवियुक्तत्वात् तदात्मभूताम्; अतएव—

**इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते॥"**

इत्याद्युक्त्या चिद्रूपा चासौ "प्रतिभा" प्रज्ञाताम् आद्योच्छलत्तात्मकत्वेन बहिरुल्लिलसिषास्वभावाम् अतएव देवीं प्रमातुरपि विश्रान्तिधामत्वात् प्रमितिरूपतया द्योतमानाम्, अत एव बहिरपि प्रमातृप्रमाणप्रमेयाण्येव "अंशा अरारूपा भागा यस्य "शूलस्य" तत्र यानि औन्मनसानि अम्बुजानि, तत्र "कृतास्पदां" तदुत्तीर्णतया भासमानां "नौमि" देहप्राणादि प्रमातुरुपन्यग्भावेन तत्स्वरूपमाविशामि—इत्यर्थः।

**आत्मनः स्फुरणं यस्येद्यदां सा परमा कला।**
**अम्बिकारूपमापन्ना परा वाक् समुदीरिता॥**

प्रसृतं विश्वलहरी स्थानं मातृत्रयात्मकमित्यत्र सूचिता मातृकामयवासनामिदानीं

---

१. तन्त्रालोक-१/२

विवृणोति-आत्मनः स्फुरणमित्यादिना। सा परमा सर्ववर्णांशविमर्शरूपा, कला विमर्शशक्तिः, आत्मनः परः शिवस्य, स्फुरणं पश्यन्त्यादि क्रमेण वैखरीपर्यन्त-विमर्शनम्, पश्येद् द्रष्टुमिच्छेत्, तदा परमा शान्तात्मिका भूत्वा अम्बिका रूपमापन्ना प्रकाशांशमात्राया अम्बिकायाः सामरस्यमापन्ना, परावाक् समुदीरयेत् परामातृ-कोच्यते। तदुक्तं सङ्केतपद्धत्याम्—

**''अनयोः सामरस्यं यत्परस्मिन्महसि स्फुटम्'' इति।**

अथेदानीं प्राथमिकविस्तृतवासनावसरेऽनुक्तेनावशेषितां ब्रह्माण्डपिण्डाण्ड-योनैक्यभावनादार्ढ्यसिद्धिमदुत्तमाधिकारित्वं ध्वननाय सकलादिभावनात्रयोत्तरमेव वर्णयितुं सङ्गतां मध्यत्रिकोणवासनां वितरेणोपदिर्शति-आत्मनः स्फुरणमित्यादि-भिर्विंशतिश्लोकैः। पूर्वं ''यदा सा परमा शक्तिः'' इति श्लोके या वृत्तिरीक्षणात्मिका शान्ता नाम्नी विश्वकारणत्वेन वर्णिता, तया हि शब्दार्थसृष्टिद्वयमुत्पाद्यते। तत्रार्थ-सृष्टेर्ब्रह्मविष्णुरुद्राः कारणानि। त एव शक्तिं विना कार्याक्षमत्वाच्छक्तिविशिष्टतया विभाव्यमाना वामा ज्येष्ठा रौद्रीत्युच्यते। तच्छक्तयस्तु भारती-पृथिवी-रुद्राणीत्वेन प्रसिद्धा इच्छाज्ञाना-क्रिया इत्युच्यन्ते। शब्दसृष्टेः कारणानि पश्यन्तीमध्यमावैखर्यः कारणानामपि कारणमीक्षणम्। ततश्चेक्षण इच्छादित्रय समष्टित्वबद्धामादित्रय-समष्टित्वं पश्यन्त्यादित्रयं समष्टित्वं च व्यक्तमेव, समष्टेरेव वटबीजत्वात्। ततश्चै-कस्यामेवेक्षणावृत्ताविच्छादित्रयजनकत्वं प्रवृत्तिनिमित्तीकृत्य यथाशान्तापदवृत्तिस्तथा सैव वृत्तिर्वामादित्रयजनकत्वादम्बिकापदवाच्यत्वमप्यापन्ना, पश्यन्त्या-दित्रयजनकत्वं शक्यतावच्छेदीकृत्य परादेनाप्युदीरिता तादृशवृत्त्याश्रयभूता देव्या अपि वृत्तिं प्रति परिणाम्युपादानत्वात् परिणामपरिणामिनोरर्थे दाच्छान्तादिपदैर्व्यवह्रियत इत्यर्थः[१]। अत्र परमेति पदं शान्तापरमिति केचित्[२]।

**ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात्क्षराः।**
**लक्ष्मीरक्षरदेहत्वादक्षरात्परमो हरिः॥**
**स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः।**
**निस्सीमत्वेन ते सर्वे तद्वशाः सर्वदैव च॥**
**सर्गस्थितिक्षयां याति प्रकाशाद्वृत्तिबन्धनम्।**
**सर्वक्षराणां एका सा कुर्यात्सात्त्विकमीक्षणम्॥**
**सर्ग स्थित यति ज्योतिर्नित्यानन्दप्रदोऽक्षरे।**
**चेष्टाप्रदेकसर्वेषामेक एव परो हरिः॥**
**तस्य नान्योऽस्ति सर्गादि कर्ता निर्दोषकश्च सः॥**

इति परमश्रुतिः। स्कन्दपुराणेऽप्युक्तम्—

---

१. योगिनीहृदयम्—श्लोक ३६ अमृतानन्द योगिकृत भास्कररायटीका।
२. योगिनीहृदयम्-श्लोक ३६ अमृतानन्द योगिकृत भास्कररायटीका।

**ब्रह्मशेषसुपर्णेशक्रसूर्य गुहादयः।**
**सर्वेक्षरा अक्षरा तु श्रीरेका तत्परो हरिः॥**

कथं तत्परत्वानित्यत आह—स्वातन्त्र्येति।

सत्तां प्रतीतिप्रवृत्तिषु स्वाधीनत्वं स्वातन्त्र्यम्'' कार्योत्पत्याद्यनुकूलोऽतीन्द्रियः कारणधर्मविशेषः शक्तिः। स्वरूपसहकारिव्यतिरिक्ता शक्तिर्नास्ति प्रमाणाभावादिति केचित्। तदुक्तम्—''न तस्य कार्यकरणं च विद्यते'' इति सहकार्यभावमभिधाय. ''पराऽस्य शक्तिः'' इति परमेश्वरसम्बन्धित्वेन शक्तेरभिहितत्वात्[1]।

## पराशक्तेः पूजाविधिः

नैमिषीया ऊचुः—

**भगवन्सर्वशास्त्रार्थपरिज्ञानवतां वरः।**
**ब्रूहि पूजाविधिः शक्तेः परायाः संग्रहेण तु॥**

सूत उवाच—

**वक्ष्ये पूजाविधिः शक्तेः परा या आस्तिकोत्तमा।**
**अत्यन्तश्रद्धया सार्धं श्रृणुध्वं भुक्तिमुक्तिदम्॥**

''शक्तौ यया सा शम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य तामेनां चिद्रूपामाद्यां सर्वात्मनाऽस्मि नतः।'' इति।

''पञ्चविधं च तत्कृत्यं सृष्टि-स्थिति-संहृति-तिरोभावाः। तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य'' इति।

**''पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः।**
**चन्द्रस्य चन्द्रिकैवेयं शिवस्य सहजा ध्रुवा''॥**

इत्यादिभिः पूजाशक्तेः परायास्तु द्विविधा परिकीर्तिता। बाह्याभ्यन्तरभेदेन बाह्या तु द्विविधा मता॥ वैदिकी तांत्रिकी चेति द्विजेन्द्रास्तान्त्रिकी तु सा। तान्त्रिकस्यैव नान्यस्य वैदिकी वैदिकस्य हि। इत्थं समस्तदेवानां पूजा विप्रा व्यवस्थिता।

**अविज्ञायान्यथा पूजां कुर्वन्पतति मानवः।**
**गन्धं पुष्पं तथा धूपं दीपमन्नेन तर्पणम्॥**
**माल्यानुलेपनं चैव नमस्कारं विसर्जनम्।**
**सर्वं मातृकया कुर्यान्मातृका मन्त्रनायिका।**
**मातृका व्यतिरेकेण मन्त्रानेव हि सत्तयाः।**
**मातृका च त्रिधा स्थूला सूक्ष्मा सूक्ष्मतराऽपि च।**
**गुरूपदेशतो ज्ञेयो नान्यथा शास्त्रकोटिभिः॥**
**''प्रलये व्याप्यते तेषां चराचरमिदं जगत्'' इति॥**

तथा—जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते, तेजस्यापः प्रलीयन्ते, तेजो

---

१. विष्णुतत्त्वविनिर्णयः—द्वितीयस्कन्धः।

वायौ प्रलीयते, वायुः प्रलीयते व्योम्नि, तदव्यक्ते प्रलीयते, अव्यक्तं पुरुषे ब्रह्म निष्कले संप्रलीयते। इति।

''विचिकीर्षुर्घनीभूता[१] क्वचिदभ्यतेति बिन्दुताम्'' इति।

''तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमः'' इति प्रपञ्चसारे। शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा ज्ञात्वेत्थं न पुनर्विशन्ति जननीगर्भेऽर्भकत्वं नराः'' इति।

**कालेन विद्यमानस्तु स बिन्दुर्भवति त्रिधा।**
**स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते॥**
**स बिन्दुः नादबीजत्वभेदेन च निगद्यते।**
**''बिन्दोस्तस्माद्विद्यमानाद्रवो व्यक्तात्मको भवेत्,**
**स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते,**
**आविर्भवति देहेषु प्राणिनामर्थविस्तृतः॥ इति।**

मूलाधारात्प्रथममुदितो भावः पराख्यः। पश्चात्पश्यन्त्यः हृदयगो बुद्धियुङ्मध्यमाख्यः, वक्त्रे वैखर्यथरुरुदिषोरस्य जन्तो सुषुम्नां, बद्धस्तस्माद्भवति पवनः प्रेरितो वर्णसंज्ञकः अथाभ्यान्तरपूजायामधिकारो भवेद्यदि। त्यक्त्वा बाह्यामिमां पूजामाश्रयेदपरां बुधः, पूजां याभ्यन्तरा साऽपि द्विविधा परिकीर्तिता। साधारा च निराधारा निराधारा महत्तरा, साधारा या तु साधारे निराधारा तु संविदि। आधारे वर्णसंक्लृप्तविग्रहे परमेश्वरीम्, आराधेयदतिप्रीत्या गुरुणोक्तेन वर्त्मना, या पूजा संविदि प्रोक्ता सा तु तस्यां मनो लयः, संविदेव पराशक्तिर्नेतरा परमार्थतः, अतः संविदि तां नित्यं पूजयेन्मुनिसत्तमाः। संविद्रूपातिरेकेण यत्किञ्चित्प्रतिभासते, स हि संसार आख्यातः सर्वेषामात्मनामपि। अतः संसारनाशाय साक्षिणीमात्मरूपिणीम्।

**आराधयेत्परां शक्तिं प्रपञ्चोल्लासवर्जिताम्,**
**संविदि वाचक-शब्देन संविद्रूपामनाकुलः।**
**अर्चयेदादरेणैव शिवामादौ महामतिः॥**
**''अकारश्चाप्युकारश्च मकारो बिन्दुरेव च।**
**नादः शक्तिश्च शान्तश्च तारभेदाः प्रकीर्तिताः।**
**हकारो रेफ ईकारो बिन्दु नादौ तथैव च।**
**शक्तिशान्तौ च सम्प्रोक्ताः शक्तेर्भेदास्तु सप्तधा॥**
**पुनः समस्तमुत्सृज्य स्वपूर्णं परसंविदम्।**
**स्वात्मन्नैवानुसंधाय पुनस्तच्च विसर्जयेत्॥**
**''स्वानुभूत्या स्वयं साक्षात्स्वात्मभूता महेश्वरीम्।**
**पूजयेदादरेणैव पूजा सा पुरुषार्थदा॥**

१. सूतसंहिता—१/५।

पूजाविधिर्यथा शक्तेः प्रोक्तो वेदैकदर्शितः।
पूजयध्वं भवन्तोऽपि मुदा तामुक्तवर्त्मना[१]॥

## मालिनी शक्तिः

बीजयोनि समापत्ति विसर्गोदय सुन्दरा।
मालिनी हि परा शक्तिर्निर्णीता विश्वरूपिणी॥

अनुत्तरप्रकाशात्मपरशक्तिरूपा हि मालिनी तद्रश्मिभूतशिवशक्तिरूपयोर्बीज-योरन्योर्या समापत्तिः परस्परसंघट्टात्मसामरस्यं तया योऽयं विसर्गोदयः तेन तेन रूपेण परिस्फुरणं, तेन सुन्दरा निरतिशया, येन श्रीपूर्वशास्त्रादौ विश्वरूपत्वमस्या निर्णीतम्[२]। द्विधा[३], नवधा, पञ्चाशद्वा च। बीजयोन्यात्मकाद्भेदाद् द्विधा। बीजं स्वराः। यानिः कादयो व्यञ्जनानि। वर्गभेदतो नवधा। बीजं शिवः। शक्तिर्योनिः।

## विसर्गशक्तिः

विसर्ग एवमुत्सृष्ट आश्यानत्वमुपागतः।
हंसः प्राणो व्यञ्जनं च स्पर्शश्च परिभाष्यते॥

इह विसर्ग एव तत्तद्वैचित्र्योपारोहक्रमेण हकारात्मस्थौल्यमुपागतः सन् ''हंस'' इत्येवमाद्यैः शब्दैः परिभाष्यते सर्वेषु शास्त्रेष्वेव मुच्यत इत्यर्थः, तदुक्तं श्रीतन्त्रराज-भट्टारके—

''हंसशून्यं तथा प्राणं हकारं नामभिः स्मृतम्॥''

निघण्टावपि—

''त्रयस्त्रिशो व्यञ्जनं च द्विकुब्जः स्पर्श एव च॥''

एवं च विसर्गस्यैव स्थूलं रूपं ''हकारः'' इत्युक्तं स्यात्॥ ननु **''शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः।''**

इत्याद्युक्त्या परस्य अनुत्तरस्य प्रकाशस्य ''स्वशक्तिमात्रस्फारो विश्वम्'' इत्य-विवादः, इह पुनः—

''विसर्गमात्रं नाथस्य सृष्टि संहारविभ्रमाः[४]।''

## शक्तेरवस्थात्रयम्

प्रातः सन्ध्यारुणकिरणाभागृङ्मयं राजसं यन्मध्ये।
चापि ज्वलदिव यजुः शुक्लभा सात्त्विकं वा।
सायं सामास्तमितकिरणं यत्तमोल्लासिरूपं।
साह्नः सर्गस्थितिलयविधावाकृतिस्ते त्रयीव[५]॥

---

१. तथैव।
२. तं. १/३/२३३
३. नि. षोडसि० पृष्ठ २३१
४. तं. १/३/१४२
५. साम्बपञ्चाशिका-श्लोक २२

हे भगवंश्चिदर्क! अह्नः सार्वजनीनस्य प्राणदिनस्य सर्गस्थितिलयविधौ ते सम्बन्धिनी सा कृतिः क्रोडीकृताशेषसृष्ट्यादिस्तुर्याख्यादिस्तुर्याख्या शक्तिर्विजृम्भत इत्यर्थः। का सा इत्याह—प्रातः हृदुन्मेषात्मनि प्रभाते गुणीभूतप्राणापानवृत्तिः शिवशक्तिसङ्घट्टात्मा या सन्ध्या तत्र येऽरुणकिरणा अनुन्मिषितवैचित्र्याद्दीप्ताः शरीरादयश्चक्षुरादिप्रकाशास्तान् भजते यदत एव राजसं विश्वराजानं विश्वप्रसरासूत्रणं च ऋङ्मयम्। यच्च परधामा स्तुतिकृच्च मध्ये मध्यधाम्नि यजुश्चिद्देवतापूजात्मक्रियाशक्तिप्रधानम्। द्वैतेन्धनप्लोषादिव ज्वलत्। ह्लादात्मसोमव्याप्त्युन्मज्जनाच्छुक्लभाः अमलमात्मभाः स्वरूपम्। सात्त्विकं च सतां भावः सत्त्वं प्रकाशमानत्वं तस्येदं सम्पादकम्। स्वप्रकाशावेशनं विश्वप्रकाशमित्यर्थः। सायमूर्ध्वं तुट्यर्धेस्तमितकिरणं गलितप्राणादिसंस्कारक्षयात् प्रशान्तसितोज्ज्वलितमरीचिनिचयम्। अतश्च निःसंस्कारद्वैताद्वैतकवलनात्तदपेक्षयैव तमो वस्तु विश्रान्त्यैकरसत्वात् साम। एतत्त्रिविधं स्थूलं सूक्ष्मपरस्वरूपं यल्लासि गृह्लासि सा तवाकृतिस्त्रयीव ऋग्यजुःसामानीव। तथाहि—प्रातार्कदेवतास्तुतिप्रधाना ऋग्वेदव्याप्तिः, मध्ये कर्मानुष्ठानात्मा यजुर्वेदोदयः, सायं विश्रान्तिहेतुगीतप्रधाना सामवेदप्रधानतेति प्रतिदिनं स्थितिः।

चिद्वत्तच्छक्तिसङ्कोचात् मलावृतः संसारी[1]।

यदा "चिदात्मा" परमेश्वरः स्वस्वातन्त्र्यात् अभेदव्याप्तिं निमज्य भेदव्याप्तिम् अवलम्बते, तदा "तदीया इच्छादिशक्तयः" असङ्कुचिता अपि "सङ्कोचवत्यो भान्ति, तदानीमेव च अयं "मलावृतः संसारी" भवति। तथा च अप्रतिहतस्वातन्त्र्यरूपा इच्छाशक्तिः सङ्कुचिता सती अपूर्णमन्यता आणवं मलम्, ज्ञानशक्तिः क्रमेण सङ्कोचात् भेदे सर्वज्ञत्वस्य किंचिज्ज्ञात्वाप्तेः, अन्तःकरणबुद्धिन्द्रियतापत्तिपूर्वम् अत्यन्तां परिमिततां प्राप्ता शुभाशुभानुष्ठानमयं कामं मलम्। तथा सर्वकर्तृत्व-सर्वज्ञत्व-पूर्णत्व-नित्यत्व-व्यापकत्वशक्तयः सङ्कोचगृह्लाना यथाक्रमं कला-विद्या-राग-काल-नियतिरूपतया भान्ति। तथाविधश्च अयं शक्तिदरिद्रः संसारी उच्यते, स्वशक्तिविकासे तु शिव एव।

## इच्छाशक्तिरुमाकुमारी

योगिन इच्छा परैव परमेश्वरी स्वातन्त्र्यरूपा शक्तिः, कुमारी-विश्व-सर्ग-संहारक्रीडा परा॥

ईदृग्योगभूमिका समापन्नस्यास्य या इच्छा सा शक्तिरुमा, परैव परमेश्वरी स्वातन्त्र्यरूपा, स च कुमारी विश्वसर्गसंहारक्रीडापरा "कुमार क्रीडायाम्" इति पाठात्।

**अथ च कुं भेदोत्थापिकां मायाभूमिं मारयति अनुद्भिन्नप्रसरां करोति तच्छीला कुमारी च परानुपभोग्यभोक्ते कात्स्र्येन स्फुरन्ती।**

१. प्रत्यभिज्ञाहृदय—श्लोक ९ पृष्ठ ६५-६६

अथवा यथा उमा कुमारी परिहृतसर्वाङ्गा महेश्वरैकात्म्यसाधनाराधनाय नित्योद्युक्ता तथैव अस्येच्छा इत्यस्मद्गुरुभिरित्ययमेव पाठो दृष्टो व्याख्यातश्च। अन्यैस्तु ''शक्तितमा'' इति पठित्वा ज्ञान-क्रियापेक्षोऽस्याः प्रकर्षो व्याख्यातः।

**परा भट्टारिका सैव कुमारीति प्रकीर्तिता।**
**सदाशिवादिक्षित्यन्तविश्वसर्गादिलीलया ॥**
**कुमारी कुं महामाया भूमिं मारयतीत्यपि।**
**कुमारी चोपभोग्यास्य योगिनो भैरवात्मनः॥**

पूर्ववर्तिन्यां योगभूमिकायां समापन्नस्य योगिनः किं भवति तदा ''इच्छाशक्तिरुमाकुमारी'' परभैरवरूपतां प्राप्तस्य महायोगिनः या इच्छा जायते, सा शक्तिः भवति उमा अर्थात् परमेश्वरी स्वतंत्ररूपिणी। यदुक्तं-''या अस्य इच्छा सा शक्तिः सा च कुमारी[१]।''

**इच्छाशक्तेः स्वस्वरूपं संस्थाया एकरूपतः।**
**चवर्गः पञ्चशक्त्यात्मा क्रमः प्रस्फुटतात्मकः।**
**या तूक्ता ज्ञेय कालुष्य भक्तिप्रवरयोगतः॥**
**द्विरूपायास्ततो जातं ट-ताद्यं वर्गयुग्मकम्।**
**उन्मेषात्पादिवर्गस्तु यतो विश्वं समाप्यते॥**

स्वस्वरूपसंस्थाया इति ईष्यमाणा नारुषिताया एकरूपत इत्यक्षुब्धाया एव इच्छाशक्तेः न पुनः क्षुब्धाया अपीत्यर्थः, चिदानीनामपि शक्तीनां यथायथं बाह्योन्मुखतया स्फुटत्वमस्ति, इत्यौचित्यात्तत्स्फाररूपाणां कवर्गादीनामपि तथात्वमित्युक्तं ''क्रमप्रस्फुटतात्मक'' इति, येति इच्छाशक्तिः ज्ञेयम् अर्थादीष्यमाणं, द्विरूपाया ऋकारॠकाररूपायाः, एवमनेनानुत्तरादिभ्य एव पञ्चभ्यः कवर्गादीनां पञ्चानां वर्गानामुदय इत्यभिहितम्, अत एवैषां ''अकुहविसर्जनीयानां कण्ठः'' इत्यादिना संस्थानत्वमुक्तम्, उक्तं चान्यत्र—

**अकुलात्पञ्चशक्त्यात्मा द्वितीयो वर्ग उत्थितः।**
**अनारुषितरूपाया इच्छायाश्च ततः परः॥**
**वह्निक्ष्माजुषस्तस्याष्टताद्यं च द्वयं ततः।**
**पादिरुन्मेषतो जात इति स्पर्शाः प्रकीर्तिताः[२]॥**

अनुत्तरानन्दे चिती इच्छाशक्तौ नियोजिते त्रिकोणं, इच्छा शिरः **प्रदेशस्था क्रियाज्ञानेच्छापरपर्यायं त्रैपुरं महाचक्रं, कुण्डलिनीसमुद्भूतं ध्रुवेच्छोन्मेषाख्यं त्रिकम्, इच्छाशक्त्यात्मिका त्रिपुरा इच्छादिशक्तित्रितयस्यैव व्यापृतत्वम्, इच्छाशक्तिर्विच्छेदनावभासनस्वातन्त्र्यात्मा मायालक्षणा समवायिनी शक्तिः।**

---

१. शिवसू० १/१३ टी०
२. तं० ३/१५०-१५२

## ज्ञानशक्तिः

**स्वात्मप्रत्यवमर्शो यः प्रागभूदेक वीरकः।**
**ज्ञातव्यं विश्वोन्मेषात्मा ज्ञानशक्तिः तथा स्थितः[१] ॥**

इह खलु प्राक् प्रक्षुब्धत्वरूपत्वात्पूर्वं व्यतिरिक्तविमृश्याभावात् स्वात्ममात्रनिष्ठः अतएव एकवीरको यः परामर्शः आसीत्, स एव ज्ञानशक्तित्वेन अन्तर्विजिज्ञास्यतया इष्टष्य योऽसौ उन्मेषः आद्यः परिस्पन्दः, तद्रूपः सन् अवस्थितः इति पञ्चमबीजनिर्णय इति।

शक्तिरूपस्य हकारस्य इच्छा-ज्ञाना-क्रिया-शान्ताख्यकलाचतुष्टयम् ज्ञानपदगता ज्ञानशक्तिर्मन्त्रात्मिका क्रियाज्ञानेच्छापरपर्यायं त्रैपुरं महाचक्रम् ज्ञानशक्तिरूपा त्रिपुरा ज्ञानशक्तिरवभासनात्मिका एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम्। ज्ञापयन्ती झटिती-त्यन्तर्ज्ञानं शक्तिर्निगद्यते ज्ञानशक्त्यंशः ज्ञानसत्त्वरूपा निर्णयबोधस्य कारणं बुद्धिः ज्ञाना विश्वकारा ज्येष्ठा ज्ञानावेशाट्टज्वी ज्ञाना वज्रेश्वरी। बुद्धीन्द्रियद्वारेण तैजसेनाहङ्कारेणात्मनो ज्ञानशक्तिरुन्मील्यते[३]।

**ज्ञानशक्तिः परा ह्येषा तपत्यादित्यविग्रहा[४]।**

सर्वशक्तेर्महेश्वरस्य विश्वप्रकाशिका ज्ञानशक्तिर्जीवादित्यबाह्यादित्यरूपतया स्थितेत्यर्थः।

## क्रियाशक्तिः

चिदात्मनः स्वपराभासनेऽन्यानपेक्षणात् स्वातन्त्र्यमुच्यते, एतत्स्वातन्त्र्यमेव क्रियाचिदात्मनः स्फुरद्रूपता पूर्णा हन्ता स्वातन्त्र्यं मायेति ज्ञानेच्छाक्रियात्मकशक्तित्रयमुक्तम्[५]।

**त एवोन्मेषयोगेऽपि पुनस्तन्मयतां गते।**
**क्रियाशक्तेः स्फुटं रूपमभिव्यक्तः परस्परम्॥**

त एव अनुत्तरानन्दशक्तयः उन्मेषेण-उकारेण यो योगः ओकारापत्तिलक्षणः संधिः, तस्मिन्सत्यपि पुनर्यदा तन्मयताम्—ओकारात्मतां संधिक्रमेण तदेकीभावं गच्छतः, तदा परस्परमनुत्तरानन्दौ औकारात्मना संभूय, क्रियाशक्तेरौकारलक्षणस्फुटं रूपम्, अभितः-समन्तात् व्यक्तः प्रकाशयत इत्यर्थः। "अभितः स्फुटं रूपं व्यङ्क्त" इत्यनेन क्रियाशक्तेः संध्यक्षरेषु यथाक्रमम् अस्फुटं, स्फुटं, स्फुटतरं स्फुटतमं च, रूपमस्ति इत्यावेदितम्।

**स्वात्मसङ्घट्टवैचित्र्यं शक्तीनां यत्परस्परम्।**
**एतदेव परं प्राहुः क्रियाशक्तेः स्फुटं वपुः॥**

---

१. तं० १/३/७३
२. नित्याषो० सूचिका
३. अष्टप्रकरणम्—पृष्ठ ११८
४. स्वच्छन्दतन्त्रम्—श्लोक ४९९
५. त्रिपुरारहस्य ज्ञानखण्ड—परिशिष्टम्-३

परं स्फुटमिति–स्फुटतममित्यर्थः, अत एव भेदप्राधान्यात् अस्याः—

**विषयेष्वेव संलीनानधोधः पातयन्त्यणून्।**
**रुद्राणून्याः समालिंग्य घोरतर्योऽपरास्तु ताः॥**

इत्यादिलक्षितानाम्–अशुद्धाध्वाधिष्ठात्रीणां घोरतराणामपि शक्तीनां निमित्तत्वम्, इत्यवगन्तव्यम्, अघोरादीनां हि शक्तीनामिच्छाशक्तेर्ज्ञानशक्तेश्च जन्म इत्युक्तम्[१]।

शक्तिरूपस्य हकारस्य इच्छा–ज्ञाना–क्रिया–शान्ताख्यं[२] कलाचतुष्टयम्, क्रिया तदधोगता क्रियाशक्तिर्मुद्रास्वरूपा क्रियाज्ञानेच्छापरपर्यायं त्रैपुरं महाचक्रम् क्रिया-शक्तिरूपिणी त्रिपुरा क्रियाशक्तिरुल्लेखनरूपा एवंभूतमिदं वस्तु भवत्विति यदा पुनः जाता तदैव तत्तद्वत् कुर्वन्त्यत्र क्रियोच्यते, क्रियाशक्त्यंशः क्रियातमोमयमूर्तिर्मन इत्युच्यते। रुद्रस्य क्रियामयी शक्तिः रुद्राणी।

## चित्-शक्तिः

चितिः स्वतन्त्रा विश्वसिद्धिहेतुः॥

''विश्वस्य'' सदाशिवादेः भूम्यन्तस्य ''सिद्धौ'' निष्पत्तौ, प्रकाशने, स्थित्यात्मनि, परप्रकाशयितृविश्रान्त्यात्मनि च संहारे, पराशक्तिरूपा—''चितिः'' भगवती ''स्वतन्त्रा'' अनुत्तरविमर्शमयी शिवभट्टारका भिन्ना ''हेतुः'' कारणम्। अस्यां हि प्रसरन्त्यां जगत् उन्मिषति व्यवतिष्ठते च, निवृतप्रसरायां च निमिषति, इति स्वानुभव एव अत्र प्रमाणम्। अन्यस्य तु माया प्रकृत्यादेः चित्प्रकाशभिन्नस्य अप्रकाशमानत्वेन असत्वात् न क्वचिदपि हेतुत्वम्, प्रकाशमानत्वे तु प्रकाशैकात्म्यात् प्रकाशरूपा चितिरेव हेतुः, न त्वसौ कश्चित्। यथा त्रिकसारे—

**स्वपदां स्वशिरच्छायां यद्वल्लङ्घितुमीहते।**
**पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला॥**

यतश्च इयं विश्वस्य सिद्धौ पराद्वंयसामरस्या पादनात्मनि च संहारे हेतुः, तत एव स्वतन्त्रा।

अपि च ''विश्वं''—नील–सुख–देह–प्राणादि, तस्य या ''सिद्धिः'' प्रमाणोपारोहक्रमेण विमर्शमयप्रमात्रावेशः, सैव ''हेतुः'' परिज्ञाने उपायो यस्याः। यदुक्तं श्रीविज्ञानभट्टारके—

**''ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम्।**
**योगिनां तु विशेषोऽयं सम्बन्धे सावधानता॥''**

''चितिः'' इति एकवचनं देशकालाद्यनवच्छिन्नताम् अभिदधत् समस्तभेद-वादानाम् अवास्तवतां व्यनक्ति। ''स्वतन्त्र'' शब्दो ब्रह्मवादवैलक्षण्यम् आचक्षाणः **चितो माहेश्वर्यसारता ब्रूते।**

---

१. तं० १/९६/१०३ २. नित्या षो० पृ० ३५–३१२

''विश्व'' इत्यादि पदम् अशेषशक्तित्वं, सर्वकारणत्वं सुखोपायत्वं महाफलं च आह[१]।

चिदात्मा हि प्रकाशैकवपुरपि नहि शान्तात्मवादिनामिवारमशकलकल्पः जडत्वप्रसक्तेः अपितु स्फुरत्प्रकाशरूपः, स्फुरत्प्रकाशरूपत्वं हि चितिशक्तिः। स्वाधिष्ठितम् आत्मसात् करोति येयं तुरीया चित्शक्तिः, तया ''क्रममुद्रया'' अन्तरितिपूर्णाहन्तास्वरूपया, ''बहिर्मुख'' इति, विषयेषु व्यापृतः अपि, ''समाविष्टः साक्षात्कृतपरशक्तिः स्फारः ''साधकः'' परमयोगी भवति। तत्र च ''बाह्याद् ग्रस्यमानात् विषयग्रामात् ''अन्तः'' परस्यां चिति भूमौ, ग्रसनक्रमेणैव ''प्रवेशः'' समावेशो भवति[२]।

केवलं तथा स्फुरन्त्यपि सा तन्मायाशक्त्या अवभासितदेहनीलाद्युपरागदत्ताभिमानवशात् भिन्न-भिन्नस्वभावा इव भान्ती ज्ञानसङ्कल्पाध्यवसायादिरूपतया मायाप्रमातृभिः अभिमन्यते, वस्तुतस्तु एकैव असौ चित्शक्तिः।

## शक्तिसंधाने शरीरोत्पत्तिः

पूर्वोक्तेच्छाशक्ति तन्मयी भावे तद्वशेन यथाभिमतं शरीरं अस्य उत्पद्यते[३]॥

**-----पुनरप्याह यथास्य प्रतिभोदये।**
**स्वरूप-लाभ-सौख्यैक्य प्रकाशैक्यं कचत्यलम्।**
**चित्प्रकाशः परं शुद्धश्चान्तर्बहिरिवोदितः।**
**नित्यः सर्वात्मकः सर्वः सर्वभावोद्भवो विभुः।**
**स लोक इति विज्ञेयः स एवानन्द उच्यते।**

अथ ईदृशस्य योगिनो विभूतियोगं दर्शयति। ''इच्छा शक्तिरुमा कुमारी'' (१-१३) इति सूत्रेण या अस्य शक्तिरुक्ता, तामेव यदा अनुसन्धत्ते, दार्ढ्येन तन्मयी भवति। तदा तद्वशेन अस्य यथाभिमतं शरीरमुत्पद्यते। तदुक्तं श्रीमृत्युञ्जयभट्टारके—

**ततः प्रवर्तते शक्तिर्लक्ष्यहीना निरामया।**
**इच्छा सा तु विनिर्दिष्टा ज्ञानरूपा क्रियात्मिका॥**

इत्युपक्रम्य—

**''सा योनिः सर्वदेवानां शक्तीनां चाप्यनेकधा।**
**अग्नीषोमात्मिका योनिस्तस्यां सर्वं प्रवर्तते॥''**

शक्तिसन्धानमाहात्म्यं लक्ष्मीकौलार्णवे—

**विभूतियोगमेतस्य दर्शयत्यथ योगिनः।**
**इच्छाशक्तिरुमेत्यादि सूत्रोक्ता शक्तिरस्य या।**

१. प्रत्यभिज्ञाहृदयम्-श्लोक। २. प्रत्यभिज्ञाहृदय-९२
३. शिवसूत्रम्—१/१९

**तद्वशात्तत्तदिच्छार्हशरीरोत्पत्तिरिष्यते ॥**

यत्सर्वमेवाहमिति भावनाया लोकोत्तरानन्दो जायते, एतदेव समाधिसुखमस्ति। स्वात्मारामे महायोगनिष्ठपुरुषे यत्समाधिसुखं समुत्पद्यते, तस्मिन् सुखे सामान्यप्राणिनाम् आनन्दोऽन्तर्भवति। अतएव समुद्रस्थानीये योग्यमनुभूयमाने आनन्देकणिकास्थानीयस्य साधारणलोकानुभूयमानस्य आनन्दस्य तस्मिन्नन्तर्भवति। साम्प्रतम् अस्य योगिन अणिमादिरष्टैश्वर्येण यथेष्टनिर्माणवैलक्षण्यसम्पादनशक्तिं दर्शयति— ''शक्तिसंधाने शरीरोत्पत्तिः''। पूर्वं ''इच्छाशक्तिरुमाकुमारी'' त्युक्तम्[१] चित्प्रकाशैकवचनं निर्यन्त्रणं स्फुरद्वपुः।

**तदास्वादैकतानत्वात्समाधिसुखमीर्यते ।**
**यद्वा ग्रहीतृग्राह्यैक वर्गप्रसरणात्मके।**
**पदद्वये स्वप्रमोदस्तत्समाधिसुखं स्मृतम्।**
**''न संधानं विना दीक्षा न सिद्धिर्ना च साधनम्।**
**न मन्त्रो मन्त्रयुक्तिश्च न योगाकर्षणं तथा॥''**

इत्यादिना प्रतिपादितम्। एतच्च—

**''यथेच्छाऽभ्यर्थितो धाता जाग्रतोऽर्थान्हृदि स्थितम्।**
**सोमसूर्योदयं कृत्वा संपादयति देहिनः॥''**

इत्यनेन संगृहीतम्। देहिनः अव्यक्तदेहवासनस्य योगिनो हृदि स्थितान् अर्थान् तत्तदपूर्व निर्माणादि रूपान् धाता महेश्वरः प्रकाशानन्दात्मतया सोमसूर्यरूपवाहोन्मीलनेन सोमसूर्यसामरस्यात्मनश्च शक्तेरुदयं कृत्वा बहिर्मुखवाहित्वेन तामासाद्य सम्पादयति। अस्यार्थस्तु—

**''तथा स्वप्नेऽप्यभीष्टार्थान्- - - - - - - -।''**

इत्येतच्छ्लोकप्रतिपादितस्वप्नस्वातन्त्र्यं प्रति दृष्टान्ते योजितः. इति स्पन्दनिर्णये मयैव दर्शितम्।

एतत्प्रक्रियया तादृक्छक्तेः निरन्तरभावनया यादृशी यादृशी ततद्वस्तुसंन्धानं विधत्ते, तेन अयं यादृशं स्वयोग्यं शरीरं वाञ्छति, तादृच्छरीरस्य उत्पत्तिर्भवति। लक्ष्मीकौलार्णवे तु शक्तिसन्धानरहस्यमुक्तम्—

**''न सन्धानं विना दीक्षा न सिद्धीर्न च साधनम्।**
**न मन्त्रो मन्त्रयुक्तिश्च न योगाकर्षणं तथा॥''**

अत एव सन्धानमेव देहान्तरोत्पत्तौ निमित्तमस्ति। उमाकुमारीरूपाया इच्छाया अनन्तशक्तिसामर्थ्येन योगनिष्ठपुरुषस्य भावयितुः नास्ति किमपि दुर्घटनम्।

यदाहुः स्पन्दे वसुगुप्तपादाः—

---

१. शि० सू० १/१९

**यथेच्छाभ्यर्थितो धाता जागृतोऽर्थान्हृदि स्थितान्।**
**सोम-सूर्योदयं कृत्वा संपादयति देहिनः।**

शक्तिस्वरूपा हि भावपदार्थाः सन्ति तेषां निरूपादानादि[१] सामग्रीसमूहं स्वभित्तावेव निभासनाद्धेतोः तादृक्छक्तिविशिष्टचिदात्मस्वरूप एव भवति, अतः स्वकीयेच्छया स्वात्मनि प्रकाशैक्याद् वर्तमानमर्थग्रामं समुन्मीलयति, अस्यां स्थितौ पूर्वप्रदर्शितं स्वातन्त्र्यात्मकशक्तिं तादात्म्यतया अनुसंदधानः स्वाधीनोऽयं योगी यथेष्टं तिर्यङ्नरामरविलक्षणां देहोत्पत्तिः विरचयति[२]।

## चिदात्मिकाशक्तेः चतुर्धा रूपनिरूपणम्

किं च चितिशक्तिरेव भगवती विश्ववामनात् संसारवामाचारत्वाच्च वामेश्वर्याख्या सती खेचरी-गोचरी-दिक्चरी-भूचरीरूपैः अशेषैः प्रमातृ अन्तःकरण-बहिष्करण-भावस्वभावैः परिस्फुरन्ती, पशुभूमिकायां शून्यपदविश्रान्ता किञ्चित्कर्तृत्वाद्यात्मक-कलादिशक्त्यात्मना खेचरीचक्रेण गोपितपारमार्थिकचिद्गगनचरीत्वस्वरूपेण चक्रास्ति, भेदनिश्चयायाभिमान-विकल्पन-प्रधानान्तःकरणदेवीरूपेण गोचरीचक्रेण गोपिता-भेदनिश्चयाद्यात्मकपारमार्थिकस्वरूपेण प्रकाशते, भेदालोचनादिप्रधानबहिष्करण-देवतात्मना च दिक्चरीचक्रेण गोपिता भेदप्रथात्मकपारमार्थिकस्वरूपेण स्फुरति, सर्वतो व्यवच्छिन्नाभासस्वभावप्रमेयात्मना च भूचरीचक्रेण गोपितासार्वात्म्यस्वरूपेण पशुहृदयव्यामोहिनाभाति[३]।

## विमर्शशक्तिः

**श्रीगुरुस्सर्वकारणभूता शक्तिः।**
**तेन नवरन्ध्र रूपो देहः॥**

इदं वाक्यद्वमुपबृंहितं तन्त्रराजे।

**गुरुराद्या भवेच्छक्तिस्सा विमर्शमयीमता।**
**नवत्वं तस्य देस्य रन्ध्रत्वेनावभासते॥ इति॥**

अत्र आद्या इति सर्वकारणभूता। इत्यस्य विवरणं, कारणस्य कार्यपूर्वभावित्वे-नाद्यत्वात्। ईश्वरानुग्रहवशेन जायमानो विवेक एव सर्वसंशयभेदनेन मन्त्रवीर्यप्रकाश-नेन तात्त्विकपदार्थानामवकाशप्रदानाद्विमर्शपदाभिधेयो गुरुः। गुर्वभिन्नरन्ध्रवान् तदुक्तम्—''गुरुरपायः'' इति शिवसूत्रे वार्तिककृता—

**गुरुरेव पराशक्तिरीश्वरानुग्रहकारिका।**
**अवकाशप्रदानेन सैव मायादुपायताम्।**
**अकृत्रिमाहमामर्श स्वरूपाद्यन्तवेदनात्।**
**परमेष्ठि समत्वेन परमोपायता गुरोः॥ इति॥**

---

१. शिवसूत्रम्—१/१९ २. तत्रैव
३. प्रत्यभिज्ञाहृदय—पृ० ७३

मालिनीतन्त्रेऽपि—

**स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः।**
**आदिमान्त्यविहीनास्तु मन्त्र्यास्स्युश्शरदभ्रवत्॥**
**गुरोर्लक्षणमेतावदादिमान्त्यं निवेदयेत्॥ इति॥**

तादृशविवेकाख्यवृत्यवच्छिन्नचिच्छक्तिस्तु प्राणशक्तिविहारावसाना सुषुम्नाख्या नाड्येव विमर्शमयीत्युच्यते। श्रीगुरोस्तावद्दिव्यसिद्धमानवभेदेन रूपत्रयम्।

तत्रैकैकं पुनस्त्रिविधमिति प्रकाशानन्दनाथादि सुभागानन्दनाथान्तभेदेन नवरूपता तन्त्रे प्रसिद्धा, तद्वासनामाह—तेनेति। षष्ठ्यर्थे तृतीया। तस्याः विमर्शशक्तेः देहः स्वरूपं नवरन्ध्रमयम्। श्रोतृचक्षुर्नासानां द्वयं द्वयम्। जिह्वा-गुह्य-पायवः एकैकमिति नवभिः रन्ध्रैः स्वस्वविषयविमर्शः उपादेयोपदेशग्रहणमनुपादेयमोचनादिकं च भवतीन्यादि साधर्म्याः, तानि विमर्शरूपाण्येव[1]। वस्तुतः ''धान्येन धनी'' इतिवदभेदे तृतीया। तदभिन्नरन्ध्रनवकवान् स्वदेह इत्यर्थः। तन्त्रराजेऽपि तस्येत्यस्य नवत्व एवान्वयः न देहपदेनान्वयः। देहरन्ध्रे नवत्वेन गुरोर्नवत्वं भासत इत्यर्थः। स्वदेहगतनवरन्ध्राणि नव नाथा इति यावत्[2]। यथा विरूपाक्षपञ्चाशिकायामुक्तम्—

**निजधर्मिणं स्वरूपयन्ती प्रकाश्यवर्गस्य।**
**शक्तिर्विमर्शरूपा शरीरयत्यखिलमस्य मम॥**

विमर्शरूपा मम शक्तिः प्रत्यवमर्शरूपिणीयं चितिः अखिलमयं शरीरयति शिवादि धरण्यन्तं विश्वं मदेकात्मतामापादयति। कीदृशी। निजधर्मिणं धर्मभूतायाः स्वस्योदयलयादिभित्तिभूतमाश्रयं प्रकाशम् उपलब्ध्यैकरूपं चैतन्यं प्रकाश्यवर्गस्य स्वरूपयन्ती ज्ञेयजातस्य तात्त्विकस्वरूपत्वेन व्यवस्थापयन्ती सर्वस्यैवास्य वेद्यजातस्य पर्यन्ते निर्बाधमवशिष्यमाणं स्वरूपं प्रकाश एवेति स्वानुभवसाक्षिकमुपदर्शयन्ती ममेयं विमर्शरूपा चितिशक्तिरखिलमेतच्छिवादिकमध्वानं मदीयमेवापादयति[3]।

## विमर्शनिरुक्तिः

पु० वि + मृष-घञ्। (१) विचारे जय (२) नाटकाङ्ग-सन्धिभेदे च। स च—

**''अन्तरे कार्यसम्बन्धः सन्धिरेकान्वये सति।**
**मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः।**
**इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते''॥** इति विभज्य
**''यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।**

---

१. भावनोपनिषद्-१, २

२. तत्रैव १/१/२

३. विरूपाक्षपञ्चाशिका—३/२८

**शापाद्यैः सान्नरायञ्च-----**

**स विमर्श इतीरितः'' इति।**

सा० द० लक्षितः। तदङ्गानि च तन्त्रोक्तानि यथा—

**चापवादोऽथ सम्फोटो व्यावसायो द्रवोद्युतिः।**
**शक्तिः प्रमङ्गेखदथ प्रतिषेधो विरोधनय।**
**प्ररोचना प्रहर्षे स्यादादानं छादनं तथा।**

शक्तिः हकारोऽन्त्यः कलारूपो विमर्शाख्यः। विमर्शाख्या शक्तिर्नित्या महाप्रकाशरूपानुत्तरशिवात्मनः स्वरूपभूता विमर्शशक्तिः बीजस्य प्रथमाङ्कुररूपेण स्थिता शक्तिः विमर्शशक्तिः कलाचतुष्टयं कूर्माङ्गवत् सङ्कोचयित्वाऽकुलविन्दौ वर्तमाना त्रिपुरा[१]।

विमर्शाख्य इति यः कश्चित् स्वभावतया स्वीकर्तव्यः अन्यथा दर्पणादि प्रकाशवत् अस्य जाड्यकक्ष्यानुप्रवेशप्रसङ्गः (परिमल कारिका ३२)। विमर्शो हि परमपि आत्मीकरोति आत्मनां च परीकरोति उभयमपि एकीकरोति एकीकृतमपि द्वयं न्यग्भावयति।

(ईश्वर प्रत्यभिज्ञाविमर्शिणी २५२)

**निजधर्मिणं प्रकाशं स्वरूपयन्ती प्रकाश्यवर्गस्य।**
**शक्तिः विमर्शरूपा शरीरमत्यखिलमस्य मम[२]॥**

विमर्शरूपा मम शक्तिः प्रत्यवमर्शरूपिणं चितिः अखिलं मम शरीरयति शिवादि धरण्यन्तं विश्वं मदेकात्मतामापादयति। कीदृशी। निजधर्मिणं धर्मभूतायाः स्वस्योदयलयादिभित्तिभूतमाश्रयं प्रकाशम् उपलब्ध्यैकरूपं चैतन्यं प्रकाश्यवर्गस्य स्वरूपयन्ती ज्ञेयजातस्य तात्त्विकस्वरूपत्वेन व्यवस्थापयन्ती सर्वस्यैवास्य वेद्यजातस्य पर्यन्ते निर्बाधमवशिष्यमाणं स्वरूपं, प्रकाश एवेति स्वानुभवसाक्षिकमुपदर्शयन्ती ममेयं विमर्शरूपा चितिशक्तिरखिलमेतच्छिवादिकमध्वानं मदीयमेवापादयति[३]।

## वैदिकवाङ्मये विमर्शशक्तिः

**संतो हि अ अप आसो भवणस्स किआ ए होइ कत्तारो[४]।**
**सच्चिअ किआ विमरिसो सोत्था खुहिआ अ वीसवित्थारो॥**
**(सन्हृदयप्रकाशे भवनस्य क्रियायां भवति कर्ता।**
**सैव क्रिया विमर्शः स्वस्था क्षुभिता च विश्वविस्तारः)॥**

स्वहृदयस्य प्रकाशो हि सर्वस्यास्तीति व्यक्तम्, असत्त्वे स्वव्याघातप्रसङ्गात्। यथोपनिषदि—

---

१. वाचस्पत्यम्—६५वां भाग ६
२. विरूपाक्षपञ्चाशिका—३/२८
३. विरूपाक्ष प० ३/२८
४. महार्थमञ्जरी—श्लोक० ११, पृ० ३३

**असन्नेव स भवति असद् ब्रह्मेति वेद चेत्।**
**अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः॥ इति॥**

तस्मात् स्वात्मरूपा हृदयप्रकाशः। सन्नित्यत्र संप्रतिपत्तिरेव। तत्र सन्नित्येतत् प्रकृतितः प्रत्ययतश्च पर्यालोचनीयम्। अस्तेर्धातोः शतीर खल्वेवमुत्पद्यते। तत्र चास्त्यंशस्यार्थो भावनाख्या क्रिया, प्रत्ययांशस्य तु कर्तेत्यङ्गीकार्यम्। ततश्च सन्नित्यस्य भवनलक्षणायाः क्रियायाः कर्तेत्यर्थो भवति। सैव भवनक्रिया कर्तृतामयी विमर्श इत्युच्यते। पुनः क्रियाशब्दोपन्यासेन भवनं सत्वम्, तच्च सामान्यरूपम्। ततो न तस्य क्रियात्वमिति वदन्तो निराक्रियन्ते। यतो भावः क्रियेति नीत्या धात्वर्थमात्रस्य क्रियात्वमभ्युपगन्तव्यमित्यावेद्यते। सा च क्रिया—

**अवस्था युगलं चात्र कार्यकर्तृत्वशब्दितम्।**
**तथाहि संविदेवेयमन्तर्बाह्योममात्मना।**
**स्वातन्त्र्याद् वर्तमानैव परामर्शस्वरूपिणी॥**

इति श्रीस्पन्दतन्त्रालोकस्थित्या यदा स्वस्मिन् हृदयप्रकाशरूप एवात्मनि तिष्ठति, तदा विमर्शः शुद्धो विमर्श इत्येव व्यवह्रियते। यदा तु विकल्पोपश्लेषलक्षणं क्षोभमनुभवति, तदा विश्वविस्तारः प्रपञ्चस्फुरणवैचित्र्यात्मा विमर्श इति तत्राधिको विशेषांशः कश्चिदुत्पद्यते। एवं च प्रकाशस्य विमर्शः स्वभाव इत्यङ्गीकार्यम्। एतद्व्यतिरेकश्च स्वभावभङ्गपर्यायत्वात् तस्याप्रकाशत्वमेव प्रयोजयति। ततश्चायं स्फटिकमुकुरादिवदल्पप्रकाशः स्तम्भकुम्भादिवदप्रकाशो वा स्यादित्युक्तं भवति। किञ्च, सन्नित्यत्र या सत्तोक्ता, सैव चित्वमुच्यते। सत्त्वचित्तयोश्च सामरस्यानन्दः। यदुक्तं श्रीरसान्वये—

**या चित्सत्तैव सा प्रोक्ता सा सत्तैव चिदुच्यते।**
**अत्र चित्सत्तयोर्व्याप्तिस्तत्रानन्दो विराजते॥**
**यत्रानन्दो भवेद् भावे तत्र चित्सत्तयोः स्थितिः॥ इति॥**

## मातृकाशक्तिः

स्त्री मातेव कायति कै-क (१) उपमातरि (२) ब्रह्मारण्यादिषु चण्डी प्रसिद्धदेवीमूर्तिषु (३) सर्वशब्दोत्पांदकेषु अकारादिकोनपञ्चाशद्वर्णेषु (४) मातरि च मेदि०। मातृ+स्वार्थे क।

मातृकारूपा त्रिपुरा समस्तवाच्याभेदमयसमस्तवाचकपदाक्षराभिन्नपरशक्ति-परशिवात्मिका मातृका परा वागात्मानाहतभट्टारकपरमशिवस्वरूपा षटत्रिंशत्तत्व-प्रसरणहेतुभूता परा संविद् माति त्रातीति मातृका। मातृका पूर्णाहन्तारूपा अहं विमर्शप्रथमकलानुत्तरप्रसराष्टवर्गसामान्याष्टावयवतत्तद्वर्गाक्षरात्मिका देवी मातृका आदि क्षान्ता वर्णमाला मातृका शक्तिस्तु मातृका ज्ञेया, सा च ज्ञेया शिवात्मिका—परभैरवीय-परावर्गात्मका मातृका, अत एव ज्येष्ठा रौद्र्यम्बिकाख्यशक्तित्रयप्रसरसंभेदवैचित्र्येण

सर्ववर्णोदयस्योक्तत्वात् सर्ववर्णसङ्घट्टशरीराणां मन्त्राणां सैव भगवती जननी सप्तषष्टि-वर्णरूपा मातृका परसूक्ष्मस्थूलवर्णाङ्कुरा आद्या शक्तिरेव सप्तषष्टिवर्णरूपिणी त्रैलोक्योत्पत्तिकारिणी मातृका परमेश्वरी परावाक् प्रसरन्ती इच्छाज्ञानक्रियाशक्तिरूपतां श्रित्वा बीजयोनिवर्गवर्ग्यरूपां शिवशक्तिमाहेश्वरादिवाचिकामादिक्षान्तारूपां मातृकात्मतां श्रित्वा जिह्वाग्रान्निर्गच्छति इति मातृकापद व्युत्पत्तिः[१]।

शब्दब्रह्ममयं चक्रमर्घ्यपुष्पादिकैः क्रमात्।
तन्मध्यादुद्धरेदादौ सर्वेषां कारणं हि यत्[२]॥

वर्णाध्वनः शब्दब्रह्ममयत्वादेव मातृकाचक्रापराभिधानस्य वर्णचक्रस्यापि शब्दब्रह्ममयत्वं सिद्ध्यति। अत एवोच्यते—"शब्दब्रह्ममयं चक्रं" इति। तदेतद् वर्णचक्रं द्विविधमत्र प्रदर्शितम्। परव्यूहमन्त्रोद्धारार्थमेकविधम्, विभवमन्त्रोद्धारार्थं चापरविधम्। नृसिंहावतारस्यापि विभवदेवतान्तःपातित्वात् तन्मन्त्रस्य द्वितीयेन वर्णचक्रेणोद्धारः सम्पद्यते।

शब्दब्रह्म यथा परा-पश्यन्ती-मध्यमा-वैखरीभेदेन चतुर्धा भिद्यते, तथैवेदं शब्दब्रह्ममयं वर्णचक्रम् अमल-शान्त-शान्तोदित-उदितभेदेन चतुर्धा विभज्यते।

## वाग्रूपिणी-शक्तिः

### परावाक्

परावाग्विलासपरामर्शेन कैवल्यसिद्धिः स्वरसोदितपराशक्तिरूपा शिवात्मिका परावाक् परा भैरवी परावाक् वर्णाम्बिकायास्तुरीयं परावाग्रूपं धाम परमशिवं प्रत्युल्लसन्तीयं शक्तिः परावागात्मना विश्ववैचित्र्यमवभासयति पारमेश्वरी परावाक् प्रसरन्ती इच्छाज्ञानक्रियाशक्तिरूपतां बीजयोनिवर्गवर्ग्यरूपां शिवशक्तिमाहेश्वर्यादिवाचिकामादीक्षान्तरूपां मातृकां श्रयते पराया वाचः स्तुतिः[३]।

### पश्यन्ती

चतुष्पदात्मिकाया वर्णाम्बिकायाः पश्यन्तीरूपमव्यक्तध्वनिरूपं परामृतमयमेकादशात्मकमभिधीर्येते एकादशात्म पश्यन्ती मध्यमा वैखरीकारणं पश्यन्ती वर्णक्रमादिभूता पश्यन्ती पश्यन्तीरूपम् शक्तिबीजम् अव्यक्ता पश्यन्तीवाक् प्रधानेन रूपेण पश्यन्तीस्तुतिः पश्यन्तीपदव्युत्पत्तिः। उत्तीर्णा पश्यन्ती चतुरन्वयात्मिका पश्यन्ती पश्यन्ती त्रिकोणरूपेण जायते चतुर्बीजवती कामेश्वर-कामेश्वरीरूपा पश्यन्तीमाता वामादियुगलरूपा पश्यन्ती[४]।

अविभागेन वर्णानां सर्वतः संहृतक्रमा। स्वयंप्रकाशा पश्यन्ती मयूराण्डरसोपमा। पश्यन्ती मध्यमोत्पादसमुद्योगेषु लक्ष्यते।

---

१. नित्या षोडशि० पृ० १-३०६
२. सात्वत संहिता—९/६५
३. नित्या षोडशिका० पृ० १४ से ३०६
४. नि० षोडशिका० पृ० ३६-३१७

**मध्यमा**

विकृतनादाष्टकं तत्समष्टिरूपमित्येवं ग्रहसङ्ख्यारूपा मध्यमावाक् मध्यमा सूक्ष्मं रूपं मध्यमारूपं कामराजम् मध्यमारूपेण त्रिपुरा व्यक्तिमागच्छति मध्यमास्तुतिः मध्यमापदनिरुक्तिः अनाहतनादमयी मध्यमा नवनादवर्गरूपा मध्यमा[१]।

**वैखरी**

सप्तचत्वारिंशत्सङ्ख्याकारादिसकरान्तान्यक्षराणि[२] वैखरीवाग्रूपाणि वैखरी-स्वरूपनिरूपणम् पश्यन्तीरूपं वैखरीमध्यमाद्वयम्। तत्र वैखरी स्थूलं रूपं तैखरी-रूपं वाग्भवबीजम् वर्णक्रमरूपिणी चिच्छक्तिर्वैखर्यादिक्रमेण त्रितत्त्वगामिनी वैखरी स्तुतिः नववर्गात्मिका वैखरी हतनामधेया, वैखरी पदनिर्वचनम्, वैखरी व्यासं चक्रं।

**तत्र सा वैखरी श्रोत्रग्राह्या[३] याऽर्थस्य वाचिका॥**
**स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा।**
**प्रोक्तृणामियं प्रायः प्राणवृत्तिनिबन्धना॥**
**वैखरी श्रोतजे बोधे मध्यमा सविकल्पके॥**
**पश्यन्ती मध्यमोत्पादसमुद्योगेषु लक्ष्यते॥**

वैखरी श्रोत्रग्राह्यैव। मध्यमा परामर्शज्ञानरूपत्वात् सविकल्पके लक्ष्यते। तस्या अपि समुत्पादनहेतुः पश्यन्ती॥

## सूक्ष्मा

स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी[४]।

अनपायिनीयत्वं चास्याः सुषुप्त्याद्यवस्थास्वपि सम्भवात्, न तु नित्यत्वेन। अस्या अपि प्रतिपुरुषं भेदेनानेकत्वादचेतनत्वाच्च कार्यत्वात्। तस्याश्च कारणं पर-बिन्दुरेवेत्युक्तम्।

## कुण्डलिनी शक्तिः

कुण्डलिन् पुंस्त्री कुण्डलं पाशाकारं वेष्टनं वास्त्यस्य इनि। (१) सर्पे स्त्रियां डीप् (२) वरुणं तस्य पाशास्त्रवत्वात् तथात्वम्। (३) मयूरे पुंस्त्री मेदि० (४) चित्रमृगे (५) वेष्टनयुक्ते त्रि स्त्रियां डीष्। सा च (जलेबी) इति ख्याते पक्वान्नभेदे भाव प्र०—तत् पाकप्रकारो दर्शितो यथा—

"नूतनं घटमानीय तस्यान्तःकुशलाजनः। प्रस्थार्द्धपरिमाणेन दग्धाम्लेन प्रलेप-येत्। द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम्। वृत्तमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत्। आतपे स्थापयेत्तावद्यावद्याति तदम्लताम्। ततस्तत्प्रक्षिपेत्पात्रे मुच्छिष्टे भाजने

१. नि० षोडशिक० पृ० ३६-३१७
२. तथैव
३. अष्टप्रकरणम्—पृ० १६२, १६३
४. तत्रैव १६२-१६४

तु तत्। परिभ्राम्य परिभ्राम्य तत् संतप्ते घृते क्षिपेत्। पुनः पुनस्तदावृत्त्या विदध्यान्मण्डलाकृतिम्। तां सुपक्कां घृतान्नीत्वा सितापाके तनुद्रये। कर्पूरादि सुगन्धेन स्नपयित्वोङ्घरेत्ततः। एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा। धातु वृद्धिकरी वृष्या रुच्या च क्षिप्रतर्पणी।'' तन्त्रसारर्प्रासिद्धे मूलाधारस्थिते घटचक्रमध्यवर्त्तिस्थे देवीभेदे यथा—

ध्यायेत् कुण्डलिनीं[१] सूक्ष्मां मूलाधारनिवासिनीम्।
तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम्॥
कोटि सौदामिनी भासां स्वयंभूलिङ्गवेष्टिनीम्।
तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः॥
उद्यद्दिनकरोद्द्योतां यावच्छ्वासं दृढासनः।
अशेषाशुभशान्त्यर्थं समाहितमनाश्चिरम्॥
तत् प्रभापटले व्याप्तं शरीरमपि चिन्तयेत्॥

## कुण्डलिनीस्वरूपम्

भुजङ्गाकाररूपेण मूलाधारं समाश्रिता।
शक्तिः कुण्डलिनी नाम विसतन्तुनिभा शुभा॥
मूलकन्दं फणाग्रेण दंष्ट्वा कमलकंदवत्।
मुखेन पुच्छसंगृह्य ब्रह्मरन्ध्रसमाश्रिता॥
पद्मासनगताः स्वस्थो गुदग कुंच्य साधकः।
वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन्।
ज्वलनाघातपवनाघातैरुन्निद्रितो हि राट्।
सद्ग्रन्थिं ततो भित्वा विष्णुग्रंथिभिनत्ति यः।
ब्राह्मग्रंथिं च भित्वैव कमलानि भिनत्ति षट्॥
सहस्त्रकमले शक्तिः शिवेन सह मोदते।
सा चावस्था परा ज्ञेया सैव निवृत्तिकारणम्[२]॥ इति॥

अपि च—

सुधाधारा सारैश्चरणयुगलान्तर्विगलितैः।
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः॥
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं।
स्वमात्मानं कृत्वा स्वपसि कुलकुण्डे कुहरिणि[३]॥

कुलकुण्डे कुः पृथिवीतत्वं लीयते यत्र तत्कुलं आधारचक्रम्। लक्षणया

---

१. शब्दकल्पद्रुम भाग-२
२. सौ० लह० (समयाचार लेखं) पृष्ठ १३
३. सौं० ल० श्लो १० (लक्ष्मीधर व्याख्या)

सुषुम्नामार्गः कुलमित्युच्यते। अत एव कौलाः कुलपूजकाः आधारसेवका इति कौलत्वं तेषामिति रहस्यम्। एतदुत्तरत्र प्रस्फोर्यते। कुलमार्गस्य सुषुम्नाया मूले यत्कुण्डं कमलकन्दाकारं आधारकन्दं तस्मिन् कुहरिणि, कमलकन्दमध्यस्थितछिद्रतुल्यं छिद्रं यस्य कुण्डस्य तत्तथोक्तम्। आधारकन्दमध्यस्थितसुषिरमध्ये विसतन्तु निभा तत्र कुण्डलिनी शक्तिः वर्तत इति तात्पर्यम्।

## कुण्डलिनी ( महामाया )

**सा च कुण्डलिनी शम्भोः शक्तिः शुद्धा जडात्मिका।**

एवंभूतमुपादानरूपं महामायाख्यं शिवतत्त्वमाचार्याः जगदुरिति। नत्विय-मार्यापरशिवविषयतया तच्छक्तिविषयतया वा व्याख्येया मृगेन्द्रवृत्ति दीपिकायां विस्तरो द्रष्टव्यः। मन्त्राद्यात्मकशब्दोपादानतया विश्वेश्वरादीनां देहेन्द्रियाद्याधारभूतशुद्धाध्व-भुवनोपादानत्वेन कुण्डलिन्याख्या महामाया सिद्धा केचिदाचक्षते बिन्दुः समवैति शिवे ततः। दृक्शक्तिवत् क्रियाशक्तिरियं कुण्डलिनी परा॥ सेयं क्रियात्मिका शक्तिरीश्वरी सर्वदोदिता[१]। श्रीभट्टकल्लटेनापि उक्तम्—

**''रूपादिषु परिणामात् तत्सिद्धिः[२]।''**

इति शक्तेश्च सङ्कोचविकासौ, नासापुटस्पन्दक्रमोन्मिषत्सूक्ष्मप्राणशक्त्या भ्रू-भेदेन क्रमासादितोर्ध्वकुण्डलिनी पदे प्रसरविश्रान्तिदशा परिशीलनम्, अधः कुण्ड-लिन्यां च षष्ठवक्त्ररूपायां प्रगुणीकृत्य शक्तिं तन्मूलं तदग्र-तन्मध्यभूमिस्पर्शावेशः।

## महामायाशक्तिः

**महामायानुभावेन यथा मन्वन्तराधिपः।**
**स बभूव महाभागः सावर्णिस्तनयो रवेः[३]॥**

महामायेति। यथा सा मन्वन्तराधिपो बभूव तथा रवेस्तनयः सावर्णिरपि मन्वन्तराधिपो बभूवेत्यध्याहृताभ्यां तथापि पदाभ्यां समन्वयोऽवगन्तव्यः। स पूर्वप्रपञ्चितसम्भवः रवेस्तनयः वैवस्वतः मन्वन्तराधिपः मनुना मन्तरऽवधिः किञ्चि-दधिकैकसप्ततिचतुर्युगात्मकः कालः तस्य अधिपः स्वामी यथा तथा। भात्यस्यां विश्वमिति माया अघटितघटनापटीयसी। माछासससिभ्यो यः टाप्। माकाभ्यामयजिति-शंतनुः। मा लक्ष्मीः अयः शुभावहो विधिर्यस्याः सेति माया। अथवा, अः विष्णुः अस्य विष्णोः माया अमाया महती चासावमाया चेति महामाया।

**वागीश्वरी च शुद्धाध्वमूलोपादनकारणम्।**
**नोपादानं वि॰ा कार्यं कदाचिदुपलभ्यते॥ इति।**

---

१. अष्टप्रकरणम्—प्र० ४७ से १७७ २. प्रत्यभिज्ञाहृदय प्र० ८७
३. सप्सतीसर्वस्वम्—१/३/२

विश्वसारोत्तरसूत्रेण महामायाख्यस्तृतीयो यः पाशो निरूप्यते। शुद्धस्याध्वनो मूलभूतमुपादानकरणं वागीश्वरी महाविद्या।

**''परा वागीश्वरी विद्या मायाऽविद्याऽपरा स्मृता''॥**

इति पौष्करवचने वागीश्वर्याः परात्वं विद्यात्वं च, मायायाश्चापरात्वम् विद्यात्वं च वर्ण्यते। महामायाया नादादीनि बहूनि पर्यायनामानि भवन्ति। तद्यथा नादकारिकायाम्—

**सिद्धो नादः परः सुमङ्गला मालिनी महामाया।**
**समनाऽनाहतबिन्दुरघोषा वाग् ब्रह्मकुण्डलिनीतत्वम्।**
**विद्याख्यं चेत्युक्तस्तैस्तैः शब्दैस्तदागमेष्वित्थम्॥ इति॥**

अनेन महामायायाः शुद्धाध्वोपादानत्वरूपं लक्षणं प्रदर्शितम्। न चात्र समवेतशक्तेरेवोपादानत्वेन सिद्धिरस्त्विति वाच्यम्, तस्या उपादानकारणत्वेऽचेतनत्वापत्त्या चेतनशिवसमवायायोगात्। तदुक्तं पौष्करे—

**''शिवे कर्तरि तादात्म्यान्नेयं कुण्डलिनी स्मृता।**
**उपादानत्वतो हेतोः कुलाले मृत्तिका यथा॥'' इति॥**

एवं च मायाप्रकृत्योर्मोहकत्वेन प्रबुद्धपुरुषकायकरणरूपशुद्धाध्वकारणत्वायोगेन परिशेषात् तदनुकारिकारणतया महामायासिद्धिरिति।

''मायोपरि महामाया'' इति परात्रिंशिका व्याख्योद्धृते कुब्जिकामते, तत्त्वसंग्रहवृत्ति-मृगेन्द्रवृत्ति विद्यापादोद्धृते रौरवागमे (१/१५) च स्मर्यते। कुब्जिकामते सा महामाया त्रिकोणानन्दरूपिणी वर्णिता। ''शुद्धविद्यैव त्रिकोणा महागुहा'' इति परा०[१] अभि (पृ० ५३-५४) महामाया, शुद्धविद्या, वागीश्वरी, मातृका चेति नामान्तराणि इति तन्त्रा० (८/३३७-३३८) शुद्धविद्यैव महामायेति पदेन श्रीरौरवादिगुरुभिरुपदिष्टेति चाभिनवगुप्त-ईश्वरप्रत्यभिज्ञाविमर्शिन्यां (३/१/१६) वदति।

मतङ्गेऽपि विद्यापादीये सप्तमे पटले शुद्धविद्यारूपेणैव सा व्याख्याता। अनुपदमेवोक्ते पौष्करवचने च सा कुण्डलिनीपदेन स्मर्यते। रत्नत्रये तु सा बिन्दुपदेन व्याख्याता। तथाहि—

**जायतेऽध्वा यतः शुद्धो वर्तते लीयते।**
**स बिन्दुः पटनादाख्यो नादबिन्द्वर्णकारणम्॥ श्लो० २२॥**

इत्यत्र नादबिन्द्वर्णकारणं परनादाख्यं बिन्दुं प्रतिपाद्य,

**शब्दतत्वमघोषा वाग् ब्रह्मकुण्डलिनीध्रुवम्।**
**विद्या शक्तिः परा नादो महामायेति देशिकैः॥**
**बिन्दुरेवं समाख्यातो व्योमानाहतमित्यपि।**
**चतस्रो वृत्तयस्तस्य याभिर्व्याप्तास्त्रिधार्णवः॥**

(श्लो० ७०-७१)

१. लुप्तागम भाग-२, उपोद्घात

इत्येवं तस्य पर्यायाः सूच्यते, परापश्यन्त्यादयश्च चतस्रस्तस्यैव वृत्तय इति निर्णीयते। एवं च वागीश्वरी, महामाया, नादः, बिन्दुरित्यादिभिः शब्दैरत्र कुण्डलिनी शक्तिरेव बोध्यत इति निश्चप्रचम्। तदत्र महामाया कुण्डलिनीविशेषेण विविच्यते[१]।

## त्रिशक्तीनामुत्पत्तिः

**मायाबीजस्य नामानि मालिनी शिववल्लरी।**
**माया मूर्तिः कला वाणी बीजशक्तिश्च कुण्डली[२]॥ इति॥**

तत्र ब्रह्ममाययोरभिन्नत्वाद् ब्रह्मवाचकोऽपि प्रणव उभयवाचकः। एवं मायावाचकमपि मायाबीजं ब्रह्ममायोभयवाचकम्। यच्च ब्रह्माण्डपुराणे ''ह्रींकार उभयात्मकः'' इति। प्रपञ्चसारे आचार्या अपि— ''तदातां तारमित्याहुरोमात्मेति बहुश्रुताः। तामेव शक्तिं ब्रुवते हरीमात्मेति चापरे''। इति। इत्थं सर्वात्मयोः प्रणवमायाबीजमन्त्रयोर्वाच्यं शब्दब्रह्मरूपं बिन्दुपदेन तान्त्रिकैर्व्यवह्रियते। तदुक्तं शारदायाम्—''आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः'' इति। आचार्या अपि भुवनेश्वरीस्तुतौ ''नमस्ते समस्तेशि बिन्दुस्वरूपे'' इति। तत्र प्रणवस्य शिवो देवताधिष्ठात्रीति प्रणवोत्पत्तिप्रकरणे। रुद्रो देवतेति गोपथब्राह्मणे। मायाबीजस्य भुवनेश्वरी देवता। अत ऐतद्बीजस्य भुवनेश्वरी बीजमिति सकलशास्त्रसिद्धान्तः। तत्रैवं सति यथा बीजादङ्कुरकाण्डपुष्पफलात्मको वृक्षो भवति तद्वन्मायाबीजवाच्याद्बिन्दोरिच्छाज्ञानक्रियारूपिण्यो रौद्री ज्येष्ठा वामात्मिका शक्तयो भवन्ति।

## ब्रह्ममायैक्यम्

अथात्र प्रपञ्चे पदार्थद्वयमेव मुख्यं सर्वप्रपञ्चमूलभूतं ब्रह्ममाया चेति निर्विवादमितरत्सर्वं तद्विकारभूतमित्यपि निर्विवादमेव। तथा च श्रुतिः श्वेताश्वतरे—

**''मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।**
**तयोर्विभूतिलेशो वै जगदेतच्चराचरम्॥ इति॥**

स्मृतिश्च—

**''शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।**
**शक्तयोऽस्य जगत्सर्वं शक्तिमांश्च महेश्वरः।।'' इति॥**

''शास्त्रकारोऽपि मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः'' इति। तदेतत्पदार्थद्वयं न भिन्नम्। किन्तु चन्द्रचन्द्रिकयोरिव तादात्म्यापन्नमेव। तदुक्तम्। ''शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति। तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव।'' इति।[३]

---

१. लुप्तागमसंग्रह—२ भाग, उपोद्घात
२. सप्तसतीसर्वस्वम्—पृ० ५
३. सप्तशती सर्वस्वम्—पृ० ४

## कुण्डलिनी महामाया

''इष्यतां कुण्डलिन्याख्यं शुद्धमेतद् द्विजोत्तमाः'' इति पौष्करवचने महामाया कुण्डलिनीशब्देन प्रोक्ता। शतरत्नसंग्रहे स्वतंत्रतंत्रसर्वज्ञानोत्तरादिप्रामाण्येन सेयं महामायाख्या कुण्डलिनी शक्तिरेवं व्याख्याता–समवायिशक्तेरधो वर्तमाना मायाकर्मा-नुसारिणी कुण्डलिनी शक्तिः शिवस्य परिग्रहशक्तिरित्युदीर्यते। तदुक्तं रत्नत्रये—मन्त्रयोनिर्महामाया या परिग्रहवर्तिनी। (श्लोक १६६) इति।

अत्र कुण्डलिनी शब्दवाच्या तु भुजङ्गकुटिलाकारेण नादात्मना स्वकार्येण प्रतिपुरुषं भेदेनावस्थिता, न तु स्वरूपेण प्रतिपुरुषमवस्थितेत्यर्थः इति सर्वज्ञानोत्तर-वृत्तिकारः। तस्या—महामायायाः सकाशान्नादबिन्द्वादिकं कार्यं निष्पद्यते। तदुक्तं विश्वसारोत्तरसूत्रे—

**''याऽथ कुण्डलिनी शक्तिर्मायाकर्मानुसारिणी।**
**नादबिन्द्वादिकं कार्यं तस्या इति जगत्स्थितिः॥'' इति।**

अत्रायमभिप्रायः—शिवेन समवायिशक्त्या क्षुब्धाया महामायायाः कुण्ड-लिन्याः सकाशान्नादाभिधानं तत्त्वं प्रथममुत्पद्यते। इदमेव शिवाधारतया शिवतत्त्व-मित्यपि वदन्ति। ततो बिन्दुसंज्ञकं तत्त्वमुत्पद्यते। इदं च तत्त्वं शब्दाधारतया शक्ति-तत्त्वम्। ततः शक्तितत्त्वात् सदाख्यं तत्त्वम्। सादाख्यादीश्वराख्यं तत्त्वम्। ईशाख्याद् विद्याख्यं तत्त्वमिति क्रमेण शुद्धानि पञ्चतत्त्वानि जायन्ते। तत्र विद्यातत्त्वे विद्या-तत्त्वाधिपतिश्च, भृगुण्यादयः सप्त विद्याराज्ञश्च, तदधीनाः सप्तकोटिमहामन्त्राश्च, वाचक शब्दा व्योमव्याप्यक्षरादयश्च, वैखर्यादयः, कायिकाद्यष्टविंशतितन्त्राणि च वर्तन्ते। ईश्वरतत्त्वेऽनन्तादयोऽष्टौ विद्येशाः, तदधिष्ठात्रयस्त्वष्टौ वामादिशक्तयः, तद्विलासिन्यः शक्तयोऽष्टौ भानुमत्यादयः, उच्छुष्मादयः पञ्चरुद्राः, सिद्धान्तशास्त्रैः प्रपूजिता नन्द्याद्यष्टौ गणेश्वराः, इन्द्रादयो लोकपालास्तेषामायुधानि च, शिवासनभूता धर्मादयोऽष्टौ च स्थिताः। सदाशिवतत्त्वे तदधिकारावस्थः सदाशिवः, प्रणवाद्या दश अणवः, पञ्च ब्रह्माणि, षडङ्गानि च, अक्षरबिन्दुस्थूलध्वनिरूपो नादश्च वर्तते। बिन्दुतत्त्वे भुवनरूपा निवृत्तिमदादिसंज्ञः सद्योजातादिसंज्ञः सकलनिष्कलाख्यः शिवः, अक्षर-बिन्दुहेतुस्वरूपः सूक्ष्मनादश्च वर्तते। नादतत्त्वे तु ध्वनिपतिरिन्धिका वा दीपिका वा रेचिका वा निवृत्यादि भुवनपतिसंज्ञः शिवो वर्तते। चिच्छक्तौ शक्तिमद्वरिष्ठः परमेश्वरः सकलजगत्परमकारणं कुण्डलिनी च वागीशां पतयश्च। तदूर्ध्वं केवलं शिव एवेति।

इदं नादतत्त्वमेव परमकारणं नित्यम्। तदेव महामायेति केचिदाचार्या वदन्ति। तेषां पक्षे चत्वार्येव कार्याणि शुद्धतत्त्वानि। तद्यथा—

**शुद्धानि पञ्चतत्त्वान्याद्यं तेषु स्मरन्ति शिवतत्त्वम्।**
**शक्तिसदाशिवतत्त्वे ईश्वरविद्याख्य तत्त्वे च॥**

(त० प्र० २१) इति।

अस्यायमभिप्रायः—तेषु मध्याच्छिवतत्त्वं बिन्द्वात्मकमाद्यं प्रधानमुपादानं स्मरन्ति पूर्वाचार्याः, परमोपादानत्वेनैव चास्य मायावन्नित्यत्वं सिद्धम्। अतश्चान्यानि चत्वारि तत्त्वानि तत्कार्याणीति भावः। श्रीमत्पौष्करे तु नादाभिधानं शिवतत्त्वमपि कार्यमेव, किन्तु तत्र शक्तितत्त्वान्तर्भावेण चत्वार्येव कार्याणि शुद्धानीत्युक्तम्। तद्यथा—

**वृत्तिस्तत्त्वात्मिका चास्य चतुर्थी संव्यवस्थिता।**
**शिवतत्त्वं सदेशाख्यमीशं विद्याह्वयं तथा॥**
**शुद्धान्येतानि तत्त्वानि रुद्राणूनां महात्मनाम्॥''** इति।

सर्वज्ञानोत्तरे तु शक्त्यभिधानं बिन्दुतत्त्वमेव परमकारणमित्युक्तम्—

**अतोर्ध्वं बैन्दवं तत्त्वं विमलं सर्वतोमुखम्[1]।**
**परमं सर्वतत्त्वानामनन्तज्योतिरूपकम्॥''** इति।

**तस्या वाग्रूपाश्चतस्रो वृत्तयः**

वाग्रूपा वैखर्यादयश्चतस्रस्तस्याः महामायायाः वृत्तयः कार्याणि।

**''तस्याश्चतस्रो वाग्रूपा वृत्तयो वैखर्यादयः।**
**वैखरी मध्यमा चान्या पश्यन्तो सूक्ष्मसंज्ञिता॥''** इति।

विश्वसारोत्तरसूत्रमत्र प्रमाणम्। एका वृत्तिर्नाम्रा वैखरीत्युच्यते, अन्या वृत्तिर्नाम्रा मध्यमा। अपरा नाम्रा पश्यन्ती। इतरा च सूक्ष्मसंज्ञिता। तत्र सूक्ष्मावृत्तिनादः, पश्यन्ती वृत्तिर्बिन्दुः, मध्यमा वृत्तिरक्षरम्, वैखरी वृत्तिर्मातृकेत्युच्यते। अनेन शब्दसृष्टिरपि बिन्दूण [illegible] भवति। अत्रायं सृष्टिक्रमः-शिवेच्छया प्रथमं क्षुब्धाया महा-मायायाः सक [illegible] द उत्पद्यते, नादाद् बिन्दुः। बिन्दोरक्षरम्। अक्षरान्मातृकेति। तदु [illegible] मृगेन्द्रे—

**शक्तेर्नादोऽभवद् बिन्दुरक्षरं मातृका ततः** (क्रि० १/२) इति।

''**बिन्दुः क्षुब्धस्तदिच्छातः शब्दराशिरभूत् तदा**'' इति च पराख्ये। आसां चतसृणामपि वृत्तीनामाश्रयभूता निवृत्त्यादयः कला पञ्च च बिन्दोरेव कार्याणि। तदुक्तं रत्नत्रये—

**''सैषा चतुर्विधा वृत्तिर्निवृत्यादिकलाश्रयात्।**
**पञ्चधा भिद्यते भूयः कलास्ताः बिन्दु[illegible]॥''**

(श्लोक-५५) इति

इयं च महामाया शब्दवस्तूभयात्मिका भवति, शब्दात्मकानां वर्णपदमन्त्राणां वस्त्वात्मकानां कलातत्त्वभुवनानां चोत्पादनात्।

अत्र शब्दब्रह्मवादिन आत्मन एव नादादिक्रमेणावस्थान[illegible] वदन्ति। तदुक्तम्, अविकारिणस्तस्य नादाद्याकारेण परिणामानुपपत्तेः। नापि [illegible]कः, तस्या अपि परिणामायोगात्। द्वयोरपि विकारित्व[illegible]पगमेऽचेतनत्वप्रसङ्गात्। तस्मात् शब्दोपादा-नत्वं [illegible]न्दोरेवाभ्युपगन्तव्यम्। तदु[illegible]कारिकासु—

---

1. लुप्तागम संग्र[illegible]-२

**''अविकार्यत्रात्मोक्तस्तच्छक्तिश्चाप्यतो न योग्यौ तौ।**
**बहुधा स्थातुं यद्वा चैतन्यं विना कृतौ विकारित्वात्''॥ इति॥**

( (श्लो० १६)

एवमत्र वागीश्वर्या महामायायाः कुण्डलिनी-नाद-बिन्दुप्रभृतिभिः शब्दैस्तेषु तेषु शास्त्रेषु व्यावकृतायाः स्वरूपमुन्मीलितम्। सर्वे इमे शब्दाः स्वस्वरूपोन्मीलनाय विस्तरमपेक्षन्ते। तन्नाधुना सम्भवति। सोऽयं तृतीयः पाशो महामायाख्यः[१]।

## नादशक्तिः

नादः पुं (नद शब्दे + भावे घञ्) शब्दः। इत्यमरः १/७/२३। यथा हरिवंशे २३५/५६ तमे—

**''विभान्ति ते देववराःससाध्याः प्रध्यातशङ्खस्वनसिंहनादाः॥''**

अर्धचन्द्राकृतिर्वर्णः। स चानुस्वारवदुचार्य्यः यथाऽर्धचन्द्रोऽनुस्वारः। इति भुवनेश्वरीमन्त्रे कृष्णानन्दः। तत्पर्यायः अर्द्धेन्द्रः, अर्द्धमाना कला राशी सदाशिवः अनुच्चार्या तुरीया विश्वमातृकला परा इति बीजवर्णाभिधानं। ब्रह्मस्वरूपघोषविशेषः, यथा—

" सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादस्तस्माद्विन्दुसमुद्भवः नादो बिन्दुश्च बीजञ्च स एव त्रिविधा मतः। भिद्यमानात् पराद्बिन्दोरुभयात्मारवोऽभवत् स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माभवत् परम्॥ सकलादिति मूर्तात्। नादो घोषः। बिन्दुः प्रणवः, स च बीजञ्च सर्ववर्णप्रभवत्वात्। तथा च ''समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः। हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते। ततोऽभूत्त्रिविदोङ्कारो योऽव्यक्तः प्रभवः स्वराट्।'' इत्यारभ्य ''ततोऽक्षरसमाम्रा-यमसृजग्रगवानजः'' इति श्रीमद्भागवते प्रपञ्चितम्।

**इत्यलङ्कारकौस्तुभस्य द्वितीयंस्तबकः।**
**नाभेरूद्ध्वं हृदि स्थानान्मारुतः प्राणसंज्ञकः।**
**नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्तितः।**

अपि च[२]—

**आकाशापि मरुज्जातो नाभेरूद्ध्वं समुच्चरन्।**
**मुखेऽतिव्यक्तमायाति यः स नाद इतीरितः॥**
**स च प्राणिभवोऽप्राणिभवच्चोभयसम्भवः॥**

आद्यः कायभवो वीणादिभवस्तु द्वितीयकः, तृतीयोऽपि च वंशादिभव; इत्थं **त्रिधा मतः। तदुक्तं— ब्रह्मणः स्थानं ब्रह्मग्रन्थश्च यो मतः। तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः।**

---

१. लुप्तागमसंग्रह—भाग-२-उपोद्घात    २. शब्दकल्पद्रुम भाग-२

वह्निमारुतसंयोगान्नादः समुपजायते।
न नादेन विना गीतं न नादेन विना स्वरः॥
न नादेन विना रागस्तस्मान्नादात्मकं जगत्।
न नादेन विना ज्ञानं न नादेन विना शिवः॥
नादरूपं परं ज्योतिर्नादरूपो परं हरिः॥

(इति सङ्गीतदामोदरः)

गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते।
तद्द्वयानुगतं नृत्यं नादाधीनमतस्त्रयम्॥
नादेन व्यज्यते वर्णः पदं वर्णः पदाद्वचः।
वचसो व्यवहारोऽयं नादाधीनमतो जगत्॥
आहतोऽनाहतश्चेति द्विधा नादो निगद्यते।
सोऽयं प्रकाशते पिण्डे तस्मात् पिण्डोऽभिधीयते॥
तत्रानाहतनादन्तु मुनयः समुपासते।
गुरूपदिष्टमार्गेण मुक्तिदं न तु रञ्जकम्॥
स नादस्त्वाहतो लोके रञ्जको भवभञ्जकः॥
श्रुत्यादिद्वारतस्तस्मात्तदुत्पत्तिर्निरूप्यते॥

किञ्च—

धर्मार्थकाममोक्षाणामिदमेवैकसाधनम्।
नादविद्यां परां लब्ध्वा सरस्वत्या प्रसादतः।

कम्बलाश्वतरौ नागौ शम्भोः कुण्डलतां गतौ पशुः शिशुर्मृगो वापि नादेन परितुष्यति। अतो नादस्य माहात्म्यं व्याख्यातुं न केनापि शक्यते। तदुक्तं आञ्जनेयेन—

''नादाब्देस्तु[१] परं पारं न जानाति सरस्वती।
अद्यापि मज्जनमयात्तुम्बं वहति वक्षसि॥''

## अथ नादोत्पत्तिप्रकारः

**आत्मना प्रेरितं चित्तं वह्निमाहन्ति देहजम्।**

ब्रह्मग्रन्थिस्थितं देहं प्राणं स प्रेरयति पावकः। पावकप्रेरितः सोऽथ क्रमादूद्‌र्ध्वपथे चरन्। अतिसूक्ष्मध्वनिं नाभौ हृदि सूक्ष्मं गले पुनः। पुष्टं शीर्षे त्वपुष्टञ्च कृत्रिमं वदने तथा आविर्भावयतीत्येवं पञ्चधा कीर्त्यते बुधैः।

**''नकारः प्राणनामानं दकारमनलं विदुः।**
**जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते॥''**

अयन्तु योगिसंवेद्य एव। अस्य अवस्थादिकं तूक्तं हठयोगप्रदीपकायाम्—

---

१. तथैव

''अशक्ततत्त्वबोधानां मूढानामपि संमतम्।
प्रोक्तं गोरक्षनाथेन नादोपासनमुच्यते॥''

४/६५/१०७।

श्री आदिनाथेन सपादकोटिलयप्रकाराः कथिता जयन्ति। नादानुसन्धानकमेकमेव मन्यामहे मुख्यतमं लयानाम्।

मुक्तासने स्थितो योगी मुद्रां सन्धाय शाम्भवीम्। शृणुयाद्दक्षिणे कर्णे नादमन्तःस्थमेकधीः।

श्रवणपुटनयनयुगलघ्राणमुखानां निरोधनं कार्यम्।
शुद्धसुषुम्नासरणौ स्फुटममलः श्रूयते नादः॥
आरम्भश्च घटश्चैव तथा परिचयोऽपि च।
निष्पत्तिः सर्वयोगेषु स्यादवस्थाचतुष्टयम्॥

## अथारम्भावस्था

ब्रह्मग्रन्थे भवेद्भेदो ह्यानन्दः शून्यसम्भवः।
विचित्रक्वणको देहेऽनाहतः श्रूयते ध्वनिः॥
दिव्यदेहश्च तेजस्वी दिव्यगन्धस्त्वरोगवान्।
सम्पूर्णहृदयः शून्यः आरम्भो योगवान् भवेत्॥

## अथ घटावस्था

द्वितीयायां घटीकृत्य वायुभर्वति मध्यकः।
दृढासनः भवेद्योगी ज्ञानिरेव समस्तदा॥
विष्णुग्रन्थस्ततो भेदात् परमानन्दसूत्रकः।
अतिशून्ये विमर्दश्च भेरीशब्दस्तथा भवेत्॥
तृतीयायां तु विज्ञेयो विहायो मर्दलध्वनिः।
महाशून्यं तदा याति सर्वसिद्धिसमाश्रयम्॥
चित्तानन्दं तदा जित्वा सहजानन्दसम्भवः।
दोषदुःखजराव्याधिक्षुधानिद्राविवर्जितः ॥
रुद्रग्रन्थिं यदा भित्वा सर्वपीठगतोऽनिलः।
निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणो भवेत्॥
एकीभूतं तदा चित्तं राजयोगाभिधानकम्।
सृष्टिसंहारकर्तासौ योगीश्वरसमो भवेत्॥
अस्तु वा मास्तु वा मुक्तिरत्रैवाखण्डितं मुखम्।
लयोद्भवमिदं सौख्यं राजयोगादवाप्यते॥

राजयोगमजानन्तः केवलं हठकर्मिणः।
एतानभ्यासिनो मन्ये प्रयासफलवर्जितान्॥
उन्मन्यवाप्तये शीघ्रं भ्रूध्यानं मम संमतम्।
राजयोगपदं प्राप्तुं सुखो पायोऽल्पच्चेतसाम्॥
सद्यःप्रत्ययसन्धायी जायते नादजो लयः॥
नादानुसन्धानसमाधिभाजां, योगीश्वराणां हृदि वर्द्धमानाम्।
आनन्दमेकं वचसामगम्यं, जानाति तं श्रीगुरुनाथ एकः॥
कर्णौ पिधाय हस्ताभ्यां यं श्रृणोति ध्वनिं मुनिः।
तत्र चित्तस्थिरीकुर्याद्यावत् स्थिरपदं व्रजेत्॥
अभ्यस्यमानो नादोऽयं बाह्यमावृणुते ध्वनिम्।
पक्षाद्विक्षेपमखिलं जित्वा योगी सुखी भवेत्॥
श्रूयते प्रथमाभ्यासे नादो नानाविधो महान्।
ततोऽभ्यासे वर्धमाने श्रूयते सूक्ष्मसूक्ष्मकः॥
आदौ जलधिजीमूतं भेरीझर्झरसम्भवाः।
मध्ये मर्दलशङ्खोत्था घण्टाकाहजलास्तथा॥
अंते तु किङ्किणी वंशवीणा भ्रमरनिःस्वनाः।
इति नानाविधा नादाः श्रूयन्ते देहमध्यमाः।
महति श्रूयमाणोऽपि मेघभेर्य्यादिके ध्वनौ॥
तत्र सूक्ष्मात् सूक्ष्मतरं नादभेरीं परामृशेत्।
घनमुत्सृज्य वा सूक्ष्मे सूक्ष्ममुत्सृज्य वा घने॥
रममाणमपि क्षिप्तुं मनो नान्यत्र चालयेत्।
यत्र कुत्रापि वा नादे लगति प्रथमं मनः॥
तत्रैव सुस्थिरीभूय तेन सार्द्धं विलीयते।
मकरन्दं पिबन् भृङ्गो गन्धं नापेक्षते यथा॥
नादासक्तं तथा चित्तं विषयान्नहि काङ्क्षते।
मनोमत्तगजेन्द्रस्य विषयोद्यानचारिणः॥
बद्धं तु नादबन्धेन मन संत्यक्तचालपम्॥
प्रयाति सुतरां स्थैर्य्यं छिन्नपक्षः खगो यथा॥
सर्वचिन्ता परित्यज्य सावधानेन चेतसा॥
नाद एवानुसन्धेयो योगसाम्राज्यमिच्छता।
नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते॥
अन्तरङ्गकुरङ्गस्य वधे व्याधायतेऽपि च।
अन्तरङ्गस्य यमिनो वाजिनः परिधायते॥

नादोपास्तिरतो नित्यमवधार्य्या हि योगिना॥
बद्धं विमुक्तचाञ्चल्यं नादगन्धकजारणात्।
मनः पारदमाप्नोति निरालम्बाख्यखेऽटनम्॥
नादश्रवणतः क्षिप्रमन्तरङ्गभुजङ्गमः।
विस्मृत्य सर्वमेकाग्रः कुत्रचिन्नहि धावति।
काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति।
नादे प्रवर्तितं चित्तं नादेन सह लीयते॥

घण्टादिनादसक्तस्तब्धान्तःकरणहरिणस्य प्रहरणमपि सुकरं शरसन्धान-प्रवीणश्चेत्।

अनाहतस्य शब्दस्य ध्वनिर्य उपलभ्यते।
ध्वनेरन्तर्गतं ज्ञेयं ज्ञेयस्यान्तर्गतं मनः॥
मनस्तत्र लयं याति तद्विष्णोः परमं पदम्॥
तावदाकाशसङ्कल्पो यावच्छब्दः प्रवर्तते।
निःशब्दं तत्परं ब्रह्म परमात्मेति गीयते॥
यत्किञ्चिन्नादरूपेण श्रूयते शक्तिरेव सा।
यस्तत्त्वान्तो निराकारः स एव परमेश्वरः॥
सर्वं हठलयोपायाः राजयोगस्य सिद्धये।
राजयोगसमारूढः पुरुषः कालवञ्चकः॥
तत्त्वबीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः।
उन्मनी कल्पलतिका सदा एव प्रवर्तते॥
सदा नादानुसन्धानात् क्षीयन्ते पापसञ्चयाः।
निरञ्जने विलीयेते निश्चितं चित्तमारुतौ॥
शङ्खदुन्दुभिनादश्च न शृणोति कदाचन।
काष्ठवज्जायते देहे उन्मन्यावस्थया[१] ध्रुवम्॥
सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः।
मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः[२]॥

स्वनामख्यातो मुनिविशेषः। अयन्तु ईश्वरमुनेः पुत्रः। न्यायतत्त्वयोगरहस्यस्य प्रणेता। अस्य वासस्थानं दाक्षिणात्यप्रदेशः।

सकलो बिन्दुरक्षरबिन्द्वात्मको नादश्च स्थूलध्वनिरूपः। द्वौ च सदाशिव-तत्त्वान्तर्भूतौ तत्र नादौ नामाभिधेयबुद्धिहेतुबिन्दोः प्रथमप्रसररूपः सूक्ष्मो नादश्चिन्तया रहितत्वेन श्रीमत्कालोत्तराद्युक्तः चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् असावपि (नादोऽपि) बिन्दोरनाहतादेष कारणं शुद्धवर्त्मनः बुद्ध्यस्मितामनोभ्यो विघाती रागतः

१. तथैव

२. शब्दकल्पद्रुम-भाग-२

कलयाश्च। मायापुंशक्तिभ्यो नादोऽन्यो दृश्यते ध्वनिभ्योऽपि। रूपरसगन्धशब्दार्थां येनावमृश्यतां नीताः, सोऽन्तः संजल्पात्मा नादः सिद्धो न विषयभावेन। अव्यक्तत्वान्नादः सूक्ष्मः शब्दः नादा उत्पत्यपवर्गयोगिनस्तेन नादकारणं महामाया विद्यारागादिकञ्चुकाद्भिन्नो महामायाजन्यो नादो मन्त्रतन्त्रादीनां कारणम्।

## बिन्दुशक्तिः

पु० बिदि-उ॥ अल्पेंऽशे अमरः। राजभेदे ततोऽपत्ये विदा० अञ्। वैन्दव तदपत्ये पुंस्त्री०। २ रेखागणित प्रसिद्धे स्थूलत्वदीर्घत्वहीने लक्षयितुं शक्ये शपदार्थ क्षेत्र शब्दे २३८९ पृ० द्रष्टव्य भा० द० उक्ते ३ अर्थप्रकृतिभेदे ''बीलं बिन्दुः पताका च उपकरी कार्यमेव च। अर्थप्रकृतयः पञ्च ''उद्दिश्य'' उपवान्तरार्थ-विच्छेदे बिन्दुरुच्छेदकारणम्'' लक्षितम्।४ अनुस्वारसूचके रेखाभेदे।''बिन्दुवद्वि-न्दुमात्रौ'' मुग्धबो० शा० ति० उक्ते ५ नादजन्ये क्रियाप्राधान्यलक्षणे चिच्छक्तेर-वस्थाभेदे, यथा—''सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादो नादात् बिन्दुसमुद्भवः।'' तद्व्याख्यां राघवभट्टश्रुतम्—

**''सा तत्त्वसंज्ञा चिन्मात्रः ज्योतिषः सन्निधेस्तदा।**
**विचिकीर्षुः घनीभूता क्वचिदभ्येति बिन्दुताम्''॥**
**अभिव्यक्ता परा शक्तिर्विना भावजलक्षणा।**
**अखण्डपरिचिच्छक्ति जाता चिद्रूपिणी विभुः॥**
**समस्ततत्त्वभावेन विवर्तेच्छा समन्विता।**
**प्रयाति बिन्दुभावञ्च क्रिया प्राधान्यलक्षणम्॥**

तस्मादेव रौद्रीरुद्रयोराविर्भावः। यथोक्तं शा० ति०—

**रौद्री बिन्दोस्ततो नादात् ज्येष्ठा बीजादजायत।**
**समेताभ्यः समुत्पन्ना रुद्र-ब्रह्मा-रमाधिपाः॥**

६ बीजभेदे ''बिन्दुः शिवात्मको बीजः शक्तिर्नादस्तयोश्चिथः। समवायः समाख्यातः[१] सर्वागमविशारदैः'' शा० ति०।

बिन्दोर्महामायात्मनः परमुक्त्यपेक्षया पाशत्वेऽपि तद्योगस्य विद्येश्वरादिपद-प्राप्तिहेतुत्वेनापरमुक्तित्वादत्र पाशत्वेनानुपादानम्। नादौ बिन्दुसकलौ सदाख्यं तत्व-माश्रितौ लयादिभेदः प्रागुक्तौ यदुपाधौ शिवस्य तु स बिन्दुरिति मन्तव्यः सैव कुण्डलिनी मता। जायतेऽध्वायते शुद्धो वर्तते यत्र लीयते। स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम्॥ बिन्दुश्च तत्कार्यं मयूराण्डरसबिन्दुवदव्यपदेश्यः परामर्शज्ञान-रूपोऽक्षरबिन्दुस्त एव सूक्ष्मत्वेनोक्तः शब्दतत्त्वमघोषावाग् ब्रह्म कुण्डलिनी ध्रुवम्। विद्याशक्तिः परा नादो महामायेति देशिकैः। बिन्दुरेवं समाख्यातो व्योमानाहतमित्यपि॥ बिन्दोश्चतस्रो वृत्तयः-कलास्ताबिन्दुवृत्तयः, कलाध्वाबिन्दुमाश्रितः बिन्दुशक्त्याभि-

१. वाचस्पत्यम् भाग-षष्ठ

व्यासः बिन्दुरात्मनि नादादिषड्ध्वं निष्पादयति। तत्र तत्त्वभुवनाध्वनौ शुद्धरूपावेव अशुद्धयोस्तु तयोर्मायोत्पन्नत्वम् केचिदाचक्षते बिन्दुः सम वेति शिवे। अतोऽयं बिन्दुः शिवसमवायिन्या ज्ञानशक्तेर्नात्यन्तपृथग् भूतोऽपि तत्समवेता क्रियाशक्तिरेवेति केचिन्मन्यन्ते-शब्दराशिश्च बिन्दूत्थो बिन्दुर्नादादसावपि। बिन्दोरनाहतादेष कारणशुद्ध-वर्त्मनः। अनाहतबिन्दुरिति बिन्दोर्मायाप्रधानयोर्विशेषः बिन्दुः शान्तिः कल। विद्या प्रतिष्ठा सन्निवृत्तिका। भोगस्थानानि पञ्चैषां बिन्दुसंज्ञा शिवेरिता। कलानाम विभागोऽयं पञ्चानां बिन्दुसंज्ञितः[१]।

**बिन्दोर्नाद समुद्भवः समुदिते नादे जगत्कारणं**
**तारं तत्त्वमुखाम्बुजं परिवृतं वर्णात्मकैर्भूतजैः।**
**आम्नायाङ्घ्रि चतुष्टयं ( मुंखं ) पुररिपोरानन्दमूलं[२] वपुः**
**पायाद्वो मुकुटेन्दुखण्डविगलद्दिव्यामृतौघप्लुतम्॥**

क्रममुक्त्यर्थमन्यमाकारध्यानयोगमाह बिन्दोरिति। बिन्दुः शिवात्मा ॐकारस्य शिरो रूपः। तत्त्वमुखाम्बुजं चतुर्विंशतितत्त्वमयमुखकमलम्। सबीजयोगमाह पिण्डमिति। अकोशेकारमकारात्मकत्वात् पिण्डं प्रणवः। कुण्डलिनी तद्रूपा सैव शिवात्मा सकलान्तरात्मा हंसः। तस्याः पदं स्थानम् अनयोरन्तकान्तिः बिन्दुरूपम्। परमार्थतस्तु शिवयोः सामरस्यमतीतरूपं नीरूपमेव। यद्वा अतीतेति—अतिपूर्वस्येणो लोटि मध्यमपुरुषबहुवचनम्। हे लोकाः यूयं सर्वं जगदतिक्रम्यैव ध्यानात् शिव-सामरस्य रूपमतीत अतियात गच्छतेत्यर्थः।

## अग्निषोमात्मको बिन्दुः

**अग्निषोमावखिलजगतः कारणन्तो मयूखैः।**
**सर्गादाने सृजसि भगवन् ह्रासवृद्धिक्रमेण॥**
**तावेवान्तर्विषुवति समौ जुह्वतामात्मवह्नौ।**
**द्वावप्यस्तं नयति युगपन्मुक्तये भक्तिभाजम्[३]॥**

हे भगवन्! अखिलबाह्यस्य नीलसुखादेर्ग्राह्यरूपस्यान्तस्य च ग्राहकरूपस्य देहादेर्जगतो यावग्नीषोमौ सर्वग्राहवाहो प्राणोऽपानश्च प्रकाशनावस्थानहेतुत्वात्कारणम्। तौ प्रसिसृक्षाप्रविविक्षात्मकसर्गादानसमये वस्त्वाभासनविमर्शात्मसृष्ट्यादौ तन्निमित्तं च ह्रासवृद्धिक्रमेण द्वादशषोडशकलाकलनपर्यायतो मयूखैः सृष्ट्यादिदेव्यात्मनिज-मरीचिभिः सृजसि मुहुर्मुहुर्निर्मिमीषे। तावेव च भक्तिभाजामन्तर्विषुवति सम्यङ्नय-नात्मसमानमरुत्प्रधाने कुम्भके समौ सोमसूर्यकलान्योन्यसङ्घर्षमिश्रितौ सन्तावात्म-वह्नावुदानवह्नौ जुह्वतां मुक्तये शिवात्मभेदप्रथारूपाण्वादिमलत्रयप्लुष्टोपलक्षितशिवाद्वैत-प्राप्तये द्वावपि युगपत्क्रमं मयूखैरेवान्तं नयसि विश्वात्मकव्याप्तिमाविश्य ज्ञानक्रियात्म-पराग्नीषोमरूपस्वात्ममयौ संपादयसि।

---

१. अष्टप्रकरणम्—विशेषशब्दार्थसूचिका
२. शारदातिलकम्-२५/६१, ६२
३. साम्बपञ्चाशिका—श्लोक १९

## सावित्रीशक्तिः

अकारं चाप्युकारं च मकारं च प्रजापतिः।
वेदत्रयाग्निरदुहद् भूर्भुवः स्वरितीति च॥

''एतदक्षरमेतां च (म० स्मृ० २/७८) इति वक्ष्यति तस्यायं शेषः। अकारमुकारमकारं च प्रणवावयवभूतं ब्रह्म वेद त्रयादृग्यजुःसामलक्षणाद् भूर्भुवः स्वरिति व्याहृतित्रयं च क्रमेण निरदुहदुद्धृतवान्।

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥

तथा त्रिभ्य एव वेदेभ्यः ऋग्यजुःसामभ्यः ''तदित्यृचः'' इति प्रतीकेनानूदितायाः सावित्र्याः पादं पादमिति। त्रीन्पादान्ब्रह्मा चकर्ष। परमे स्थाने तिष्ठतीति परमेष्ठी[1]।

उक्तञ्च पद्मपुराणे—

उपलभ्य च सावित्रीं नोपतिष्ठेत यो द्विजः।
काले त्रिकालं सप्ताहात् स पतेन्नात्र संशयः॥
गायत्रीमंत्रतोयाढ्यं दत्तं येनाञ्जलित्रयम्।
काले सावित्रिकेण स्यात्तेन दत्तं जगत्त्रयम्॥
अष्टादशसु विद्यासु मीमांसाऽतिगरीयसी।
ततोऽपि तर्कशास्त्राणि पुराणं तेभ्यः एव च॥
ततोऽपि धर्म्मशास्त्राणि तेभ्यो गुर्वी श्रुतिर्नृप।
ततो ह्युपनिषत् श्रेष्ठा गायत्री च ततोऽधिका॥
वाच्यवाचकसम्बन्धो गायत्र्याः सवितुर्द्वयोः।
वाच्योऽसौ सविता साक्षात् गायत्रीवाचिका परा॥
तां देवीमुपतिष्ठन्ते ब्राह्मणा ये जितेन्द्रियाः।
सूर्यलोकं ते प्रयान्ति क्रमान्मुक्तिञ्च पार्थिव॥

उषाध्यानम्—

श्यामवर्णामिति ज्ञेयां द्विनेत्रां च द्विनासिकाम्।
नीलोत्पलं च वामेन दक्षहस्तेन पङ्कजम्॥
सौभाग्यं पीतवस्त्रेण उषाध्यानं ततः परम्।
भानोस्तु दक्षिणे भागे चावाह्याथ प्रपूजयेत्॥

प्रत्यूषाध्यानम्—

एकाननां द्विनेत्रां च द्विहस्तां च द्विपादकाम्।
श्वेतवर्णामिति ज्ञेयां सर्वाङ्गकुङ्कुमालयाम्॥

---

१. मनु० २/७६-७७

सर्वाभरणभूष्यां च वामहस्तेन चम्पकम्।
कुमुदं दक्षहस्तेन विश्वरूपपरायणम्॥
आदित्यस्य वामभागे चावाह्याय सुपूजयेत्॥
धूपं दीपं च नैवेद्यं ताम्बूलं छत्र चामरम्॥
पाद्यमाचमनं चैवात्यर्घ्यं तु मुखवासकम्।
दूर्वाक्षतांश्च पुष्पं च मुकुटे चैव योजयेत्॥
अष्टादशंसङ्ख्याकनमस्काराः प्रदक्षिणाम्।
यथाशक्तिं च दण्डेन स्तोत्रं नृत्तं तु योजयेत्[1]॥
भवत नस्मनसौ समोकसा अरे यसौ[2]।
माहिंसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः॥
अग्ना अग्निश्चरति प्रविष्टं ऋषीणां पुत्रो अधिराज एषः।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं बहतु प्रजानन्।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद ऋतस्य त्वा देव हविः पाशेन प्रतिमुञ्चाम्यमुष्मै जुष्टं घर्षामानुषं अद्भ्यस्त्वौषधीभ्योऽनुत्वामाता-मन्यतामनु पितानु भ्राता सगर्भ्योऽनुसखा सयूथ्य आवह देवान् देवयते यजमानायापां पेरुरसि स्वात्तं हव्यं देवेभ्यो घृतवत् स ते वायुः प्राणेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा।

अपि च चतुर्थं मन्त्रमाह—

भुर्भुवः[3] स्वस्त्रयो वेदोऽसि। ब्रह्म प्रजां मे धुक्ष्व। ये भूरादयस्त्रयो लोका यश्च वेदो हे उक्थ तत्सर्वं त्वमसि। मह्यं ब्रह्मं वेदं प्रजां पुत्रादिकां धुक्ष्व संपादय।

## सावित्रीशक्तिः

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये।
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ॥
नदः शोणो गङ्गा तपन तनयेति ध्रुवममुं।
त्रयाणां तीर्थानामुपनयसि संभेदमनघे॥

अत्र नयनत्रयस्य त्रिवर्णत्वं विशिनष्टि—

हे पशुपतिपराधीनहृदये पशुपतौ सदाशिवे पराधीनं परवशं हृदयं यस्याः सा शङ्कराधीनहृदये! हे अनघे कपटादिदोषरहिते हे मातः अरुणधवलश्यामरुचिभिः रक्तश्वेतकृष्णकांतिभिः। दयामित्रैः सततं दयापरायणैः नेत्रैः त्रिनेत्रैः नः अस्मान् पवित्रीकर्तुं कृतापराधान् तव सेवाच्युतान् भक्तान् नः पावयितुं शोणः रक्तो नदः, श्वेता

१. रौरवागमः—सौरपूजाविधिः
२. काठकसंहितायाम् २/४-५
३. ऐतरेयारण्यकम्—२/१३

गङ्गा, कृष्णा तपनतनया सूर्यपुत्री यमुना इति त्रयाणां तीर्थानां अमुं सम्मुखस्थितं संभेदं ऐक्यं उपनयसि प्रापयसि।

अत्र वेदगर्भामवतारयति अत्रेदं रहस्यं। पशुपतिः ह्रौं। परा ह्रीं। आधीनं ऐं। हृदयं इं। इत चतुर्णां सावित्र्या गायत्र्या सम्भेदे मिश्रीकरणम्।

**मंत्रः—ॐ ह्रौं ह्रीं ऐं ईं सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् वेदगर्भे भगवति स्वाहा[1]।**

## ज्येष्ठा

वामाज्येष्ठा[2] रौद्रात्मकं कोणत्रयं ज्येष्ठाशक्तिर्बिन्दुद्वयमध्यगाज्येष्ठारौद्र्यम्बि-काख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयः अकारस्य शिवरूपस्य वामाज्येष्ठा रौद्र्यम्बिकाख्य कलाचतुष्टयात्मकत्वं ज्येष्ठाशक्तिर्नखाग्रगा ज्येष्ठेयं यदिदं पुरन्दरपुरं रेखाचतुष्कं बहिः वामादि पञ्चकेष्वन्यतमा ज्येष्ठाशृङ्गारटाकारतां गता ज्येष्ठा विश्वोदय-प्रसरभूमिः बिन्द्वीशानगता रेखा पुनः कुटिलीभूय बिन्दुपश्चिममाग्नेयं गता ज्येष्ठा, ज्येष्ठा सुप्रबुद्धानां शक्तिः सत्ता शिवस्तदंशा ज्येष्ठा ज्येष्ठांशो विष्णुः ज्येष्ठा ज्ञानवशादृज्वी ज्येष्ठांशः षष्ठीशः।

## अम्बिका

बिन्दोरवस्थाविशेषात्मिकासु[3] त्रिषु शक्तिष्वन्यतमा शशाङ्कशकलाकाराऽर्ध-चन्द्रिका अकारस्य शिवरूपस्य वामाज्येष्ठारौद्र्यम्बिकाख्यकलाचतुष्टयं वैन्दवं चक्रमम्बिकामयं कान्दाख्याऽम्बिकाशक्तिः शृङ्गाटरूपशक्तिनामादौ प्रभासनतयाऽ-धोमुखार्धचन्द्राकारेण स्थिताऽम्बिकाशक्तिः कन्दमिति गीयते चन्द्रबिम्बार्धमम्बिका लौघपादाभिधेया अम्बिकास्वरूपः शम्भुः, शान्तात्मिकाऽस्य शक्तिः शिवशक्त्योरिदं मिथुनमुत्तरसमयात्मतुर्यमधितिष्ठेत्, अम्बिकाशक्तिः शान्तयासाकं समरसभावं याता महाबिन्दुपादाभिधेया।

## रौद्री

वामाज्येष्ठा[4] रौद्र्यात्मकं कोणत्रयं रौद्रीमोक्षमार्गनिरोधनाद् रोधिनी अकारस्य शिरो रौद्री योऽयं शक्त्यनलत्रिकोणनिबद्धे रौद्रीयम् रौद्रीं कुञ्चिकयोद्घाटय बुभुत्सूनां द्रावयित्रीं रौद्रीं शृङ्गाटे वामेन बिन्द्वग्रप्रथमाङ्कुरिमिलिता शक्तिः रौद्रीचितिशक्तिः सत्ता शिवस्तदंशा रौद्री रुद्रशक्तिः।

## वामा

वामाज्येष्ठारौद्र्यात्मकं[5] कोणत्रयमकारस्य शिवरूपस्य वामा-ज्येष्ठा-रौद्र्य-म्बिकाख्यकलाचतुष्टयात्मकत्वम्। वामाद्याः पश्यन्त्या-अवयवाः चक्रस्य त्रयो भ्रमा

---

१. सौन्दर्यलहरी त्रि० टी० श्लोक- ५४
२. नि० षोडशि- पृ० १९-३१७
३. तथैव पृ० ३१-३१४
४. नित्याषोडि० पृ० १०-३१
५. तथैव पृ० १९-३१४

वामारूपा: तत्त्वानि वमतीति वामा। वामा संसारिणां विमोहिनीशक्तिः बिन्दुदक्षिणेन ईशानान्तं गता रेखा वामा वामा संसारवमना सत्ता शिवस्तदंशा वामा वामांशो ब्रह्मा वामादिभ्योऽष्टकोणं निष्पद्यते।

स्थितिसंरक्षणभावलक्षणानां व्यापाराणां संसाररोधफलत्वाद् रोधो वामा-व्यापारः।

## तिरोधानशक्तिः

मलस्य शक्तयोऽधुनैव चर्चिताः। न चैताः शक्तयः स्वातन्त्र्येण रुन्धन्ति, अपसरन्ति वा, किन्तु परमेश्वरस्य रोधशक्त्यधीनाः साऽपि रोधशक्तिरुपचारात् पाश इति मृगेन्द्रसूत्रद्वयेन-प्रतिपाद्यते—

**तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा।**
**धर्मानुवर्तनादेव पाश इत्युपचर्यते॥**
**परिणामयत्येताश्च रोधान्तं कार्कचित्विषा।**
**मदोन्मीलनमाधत्ते तदानुग्राहिकोच्यते॥**

(वि ७/११-१२)

माहेश्वरी शैवी शक्तिस्तासां सर्वशक्तीनां धर्मानुवर्तनाद् दृक्-क्रियात्मकसं-निरोधकत्वलक्षणस्य धर्मस्यानुसरणादेव पाशत्वेनोपचर्यते। न चात्र मुख्यं पाशत्वं। यतो हि सा सर्वानुग्राहिका सकलजगदनुग्रहस्वभावा शिवा, ततो न मुख्यं पाशत्वम् तस्याः। रोधशक्तेर्हि मलपरिपाकान्तमेव तिरोधानैकस्वभावत्वम्, तदनन्तरमणुवर्गाणा-माशयविकासनहेतुत्वादनुग्राहकत्वं सिद्ध्यति। तथा चेयमेव पतिशक्तिर्भावन्मल-परिपाकमचिद्रूपाणि मलकर्म-माया तत्कार्याण्यनुगृह्णाति, चिद्रूपतामात्मनस्तिरोदधाति, पाकानन्तरमात्मनोऽनुगृह्णाति पाशं तिरोदधातीति चिदचितां सर्वेषामनुग्रहकारित्वात् सर्वानुग्राहिकेत्यपि सिद्धम्। यदुच्यते—

**शिवस्य शक्तिः सर्वेषां सदानुग्रहकारिणी।**
**पाशधर्मनिरोधेन पाशानां पाशहेतुना॥**
**निवृत्तियोग्यतां तेषां करोतीति यतस्ततः।**
**पाशधर्मनिरोधाच्च विधत्ते पश्वनुग्रहम्॥**
**तादात्मिकेन रोधेन रोधिकेत्युपचर्यते॥'' इति॥**

तत्त्वप्रकाशेऽपि—

**पाशानुग्राहित्वात् पुरुषतिराधायिका विभो शक्तिः।**
**पाशत्वे नाभिमता पाशाश्च चतुर्विधास्त्वेवम्॥''**

(श्लोक २०) इति।

सोऽयं द्वितीय पाशः[१]।

१. लुप्तागमसंग्रहः भाग-२ (उपोद्घातः)

## त्रिपुरसुन्दरीस्वरूपनिर्वचनम्

स्फुरत्तेति समाख्याता या सा त्रिपुरसुन्दरी।
यत्सारं सर्वजगति जीवभूतं च दृश्यते॥
येन सर्वमिदं व्याप्तं सा वै त्रिपुरसुन्दरी।
यया विना जगत्सर्वं मूकान्धबधिरोपमम्॥
जडवत् स्थानैव वा स्यात् सा वै त्रिपुरसुन्दरी।
दृश्यं द्रष्टा दर्शनं च परं पूर्वं तथेतरत्।।
प्रकाशश्च तमश्चैव यया सा त्रिपुरा भवेत्।
विद्यासु श्रेष्ठरूपत्वात् त्रिभावपुरतः स्थितेः॥

प्रकृते स एव ज्ञानात्मा परमेशः। चिदानन्दघनस्वच्छवपुःचिदानन्देन घनं निबिडम् अत एव स्वच्छं जडलेशेनाऽपि रहितं वपुः शरीरं यस्य। तस्य चित्त्वं स्वप्रकाशत्वम् आनन्दत्वमद्वितीयत्वम्। एतेन चिदानन्दशब्दाभ्यामेकमेवाखण्डं वस्तूच्यते। तदेव वस्तु सर्वजगत्प्रकाशकमपि न दीपादिवत् प्रकाशकम्, अपितु दीपादिविलक्षणम्। दीपादिकं तु घटादिकं प्रकाशयति केवलं, न तु घटः प्रकाशत इति स्वान्तर्विमृशति। ज्ञानात्मा तु घटादिकमयमीदृश इति विमृशत्यपि। एवं विमृशद्रूपश्चेतन एव, न तु जड़ो दीपादिः। एवं जडव्यावृत्तरूपतैव शक्तिरित्युच्यते। सैव शक्तिस्त्रिपुरसुन्दरीति वक्तुमागमप्रसिद्धनामान्तरैरनुवदति—**प्रकाशत्वमित्यादि**॥

प्रकाशत्वमित्यादिना या सम्यक् कल्पितरूपेण आख्याता प्रसिद्धा तन्त्रेऽष्विति शेषः। पकारान्तरेणोपपादयति—**यत् सारमिति**। चिदात्मनि विमृशद्रूपत्वाभावे जगति किमपि न व्यवस्थितं स्याद् इति तदेव सारभूतम्। अतएव जीवभूतमपि दृश्यते, विद्वद्भिरिति शेषः।

अविमृष्टं किमपि न सिध्यति, इति तेन सर्वं व्याप्तमित्याह—**येनेति**। सा किमर्थमङ्गीकार्येति चेदाह—**ययेति**। विमर्शाभावे किमपि न सिध्यतीति भावः।

**जडवदिति**। यया विना सर्वं जडचेतनात्मकं जडवत् स्यात् शून्यमेव स्यात्। शून्यमस्तीत्यत्र साक्ष्यभावान्नैव स्यात्। किं तज्जडवद् स्यादिति चेदाह- **दृश्यमित्यादि**। इतरत् मध्यस्थम्।

प्रकाशः प्रकाशमानता। तमः अप्रकाशमानता। वस्तूनामिति शेषः। एवं तस्याः स्वरूपमभिधाय सर्वोत्तमत्वनिमित्तनामाष्टकप्रवृत्तिनिमित्तं वक्तुमाह—**विद्येत्यादि**। **सर्वविद्याश्रेष्ठत्वादियं श्रीविद्या त्रयाणां भावानां मातृमानमेयात्मकादीनां पुरत आदावग्रे च स्थितेस्तुरीयत्वेन सर्वकारणत्वादियं त्रिपुरा॥**

**सर्वप्रेमास्पदत्वाच्च परमानन्दरूपतः।**
**जगद्यात्रानियन्तृत्वाद्राजराजेशसंश्रयात् ॥**

**कामप्रदाननैपुण्यादनादित्वात् स्थिताऽष्टधा।**
**इति ते कथितं सर्वं श्रीविद्यारूपमुत्तमम्॥**

**सर्वेति।** सर्वेषां प्रेमास्पदत्वात्, आत्मार्थमेव चान्यत्र प्रीतिरिति न्यायात्। इयं सुन्दरी। परमानन्दरूपतः निरतिशयसुखात्मत्वात्। इयं ललिता। जगतो यात्रा प्रवृत्ति-निवृत्तिरूपागतिः, तत्र नियन्तृत्वान्नियामकत्वादियं सिंहासनेश्वरी। राज्ञाम् इन्द्रादीनां राजानो ब्रह्मादयः, तेषामीशः परशिवः, तस्य संश्रयात् संश्रयत्वात्। परशिवोऽपि स्वशक्तिमाश्रित्य तिष्ठतीति राजराजेश्वरी॥ **कामेति।** भक्तानामिष्टप्रदाने चतुरत्वात् कामेश्वरी। अनादित्वाज्जन्मराहित्यादियं परा सर्वकारणमिति। श्रीविद्याविध्यङ्गभूतम् उत्तममितरदेवतानाम् असाधारणं रूपम्॥

षोडशनित्यासु प्रथमा महानित्या नवनित्यासु[१] तृतीया त्रिकोणमध्ये त्रिपुर-सुन्दरी पूज्या ओड्माणपीठनिलया।

## कामकला

**यद्भक्ताखिलकामपूरणवणस्वात्मप्रभावं महा।**
**जाड्यध्वान्तनिवारणैकतरणिज्योतिः प्रबोधप्रदम्[२]।**
**यद्वेदेषु च गीयते श्रुतिमुखं मात्रा त्रयेणौमिति॥**
**श्रीविद्ये तव सर्वराजवशकृत् तत्कामराजं भजे॥**

हे श्रीविद्ये! तव तत्कामराजमहं भजे। (तत् तस्मात्) यद्यस्मात् भक्ताखिल-कामपूरणवणस्वात्मप्रभावम्। कथंभूतम्? जाड्यध्वान्तनिवारणैकतरणिज्योतिः। पुनः कथंभूतम्? प्रबोधप्रदम्। यद्वेदेषु मात्रात्रयेण "ओम्" इति गीयते। अतएव श्रुतिमुखम्। पुनः कथंभूतम्। सर्वराज वशकृदित्यन्वयः। यत् यस्मात्। कामराजं द्वितीयम्। भक्ताखिलकामपूरणवणस्वात्मपूरणं सम्पादनम्, तत्र वणो दक्षः, स्वात्मप्रभावः स्वस्य कामकलाबीजस्य आत्मा बिन्दुत्रयम्, तस्य प्रभावः प्रसारः पूर्वोक्तवामादिब्रह्मादि-देवतात्रयं विद्यते यस्मिन् महाजाड्यध्वान्तनिवारणैकतरणिज्योतिः महाजाड्यमज्ञानं तदेव ध्वान्तमन्धकारः, तस्य निवारणं विनाशनम्, तत्रैकमद्वितीयम्, तरणिज्योतिरिव तरणिः सूर्यः, तस्य ज्योतिः प्रकाशस्तद्वत्। प्रबोधप्रदं प्रकर्षेण बोधस्तत्त्वज्ञानं प्रददाति प्रकर्षेण निश्चयेनोत्पादयतीति। यत् यस्मात्। तुरीयस्वरूपम्। वेदेषु वेदाध्ययना-रम्भसमयेषु। चकारः समुच्चये। गीयते उच्चार्यते। श्रुतिमुखं वेदादिभूतम्। मात्रात्रयेण अकारोकारमकाराक्षरत्रयेण। ओमिति। श्रीविद्ये सङ्केतसारे। तत्तव त्र्यक्षार्याः। सर्वं राजवशकृत्। सर्वजीवाः राजानश्च वशं करोति। तत् पूर्वोक्तम्। कामराजं कामराज-संज्ञम्। भजे सेवे। मात्रात्रयेणेति कोऽर्थः? कामकलाक्षरस्य बिन्दुत्रयात्मकत्वेन बिन्दुत्रयस्य सूर्यसोमाग्नित्वेन सोमसूर्याग्नीनामकारोकारमकारात्मता सर्वत्रागमेषु दृष्टेत्ये-

---

१. नि० षोडशि० पृ० ३-३८२ २. त्रिपुरामहिमस्तोत्र—श्लोक-८

## श्रीमहाविद्यायन्त्रम्

### चित्र-१

### श्रीयन्त्र

समयाचार मतानुयायियों द्वारा पूजित सृष्टिक्रम

(५ शक्ति-त्रिकोण ऊर्धमुखी, ४ शिव-त्रिकोण अधोमुखी)



चित्र-२

## श्रीयन्त्र

कौलाचार मतानुयायियों द्वारा पूजित संहारक्रम

(५ शक्ति-त्रिकांण अधोमुखी, ४ शिव-त्रिकोण ऊर्धमुखी)



तत्सर्वं त्रिकात्मकं कामकलाक्षरे विश्रान्तमिति[1] प्रणवेनापि कामकलाक्षरमेव गीयत इति तात्पर्यम्।

## श्रीविद्या त्रिपुरसुन्दरीरहस्यम् ( श्रीचक्रराज )

शास्त्रस्य ऋग्वेदादेर्योनिःकारणं निश्वसितवदनायासेन रचयित्री, तत्त्वात्। एतस्य महाभूतस्य निश्वसितं यदृग्वेदो यजुर्वेदः सामवेदः इत्यादिश्रुतेः, ''तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे'' इत्यादि मन्त्रवर्णात् ''अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः'' इति देवीसूक्तमन्त्रवर्णाच्च। प्रथमे निश्वसितस्य चेतनधर्म्मत्वात्तद्रूपेणारोपेण, द्वितीये तस्मादित्यनेन चेतनस्य लाभात्, तृतीये च वक्त्र्याश्चेतनत्वनियतधर्मकत्वाच्च शास्त्रयोनित्वं चेतने पर्यवसन्नम्। यद् वस्तुशास्त्रयोनिस्तदेकवाद्यस्य जननापादानं, ''यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै'' इति श्रुतेः। तस्माच्चेतनं ब्रह्मेति फलितम्।

पुरुषस्तु प्रकृतिविलक्षणश्चित्स्वरूप इति हि साङ्ख्यसिद्धान्ताः। श्रीचक्रपक्षे तु प्रमाणोपन्यासार्थं सूत्रमिदम्, शास्त्रञ्च योनित्वञ्चेति समाहारे द्वन्द्वस्तस्मात्। शास्त्रं यथा—

**चतुर्भिः शिवचक्रैश्च पञ्चभिः।**
**शिवशक्त्यात्मकं ज्ञेयं श्रीचक्रं शिवयोर्वपुः॥**
**त्वगसृङ्मांसमेदोऽस्थिधातवः शक्तिमूलकाः।**
**मज्जाशुक्रप्राणजीवधातवः शिवमूलकाः॥**
**नव धातुरयं देहो नवयोनिसमुद्भवः।**
**दशमो योनिरेकैव परा शक्तिस्तदीश्वरी॥**

श्रीलक्ष्मीधरविद्यानाथाचार्यपादधृतकामिख्यागमवचनम्, (पिण्डाण्डस्थूलदेहः) तस्माच्छास्त्रात् श्रीचक्रस्य भोग्यजन्महेतुत्वं निर्णीयते। योनित्वं-जन्महेतोर्योनिशब्दव्यपदेश्यत्वम्, अस्ति च श्रीचक्रस्य तथा व्यपदेशो नवयोनिसमुद्भव इति नवयोन्यात्मकत्वाच्छ्रीचक्रस्य तज्जन्यत्वाद्देहस्य तथारूपत्वेनाभिधानम्। तेन श्रीचक्रस्य जन्महेतुत्वमनुमानेनापि सिद्धम्, तदर्थश्च समयिनां श्रीचक्रोपदेशकं शास्त्रं शुभागमपञ्चकम्, तस्य ''हेयत्वावचनात्'' हेयत्वस्य अकथनात् समयाचारप्रतिपादकस्य शुभागमपञ्चकस्य श्रुतिस्मृतिविरुद्धत्वाभावेन ''एवंविधानि चान्यानि'' इत्यनेनापि ग्रहीतुमनर्हत्वात्। अतएवोक्तं सौन्दर्यलहर्य्यामाचार्यचरणैः—

**चतुःषष्ट्या तन्त्रैः सकलगति-( भि )-सन्धाय भुवनम्।**
**स्थितस्वत्तत्सिद्धिप्रसवपरतन्त्रः पशुपतिः।**
**पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना।**
**स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम्॥**

---

१. तथैव

शुभागमपञ्चकञ्च वशिष्ठसनकशुकसनन्दनसनत्कुमारमुनिभिर्विरचितम्, तत्र क्रियाकलापो वैदिकमार्गेणैवोपदिष्टः। करालभैरवादितन्त्रस्य हेयत्वमिव शुभागमपञ्चकस्य हेयत्वं न क्वाप्युक्तमिति भावः।

## त्रिपुरासुन्दरी ललितादेवी वा

शैवागमे तत्त्वातीतपरमसत्तैव परमशिव इति नाम्नाभिहितः त्रिपुरासिद्धान्तमतेनासौ परमसत्ता त्रिपुरासुन्दरी ललिताम्बिका चेति नामभिरभिहिताऽभवत्। प्रत्यभिज्ञादर्शने यत् शिवतत्त्वं शक्तितत्त्वञ्चेत्युच्यते तदेव त्रिपुरामतस्य कामेश्वरः कामेश्वरी चेति, तथा गौडीयवैष्णवमतस्य श्रीकृष्णो राधा नामभ्याभिहितं भवति। कामेश्वर-कामेश्वरी-सामरस्य साम्यावस्था वा "सुन्दरी" वा त्रिपुरासुन्दरीति कथ्यते। त्रिपुरा हि सर्वाधिष्ठानरूपा, सत्यरूपा, समोनाधिकवर्जिता, सच्चिदानन्दमयी, समरसा, श्रीललिताऽम्बिका चेति। एषैव सर्ववेदान्ततात्पर्यभूमिः। इत्येवं प्रकारेण निरतिशयसौन्दर्यमूर्तिरियं मातृरूपेण परिकल्पितेति साधना-राज्यस्यैकं निगूढं रहस्यम्। श्रीमच्छङ्कराचार्यश्च निखिलसौन्दर्याधारललितादेव्याः काञ्चिद् वर्णनमकरोत्तस्य "सौन्दर्यलहरी" ग्रन्थे—

**तदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं**
**कवीन्द्राः कल्पन्ते कथमपि विरञ्चिप्रभृतयः।**
**यदालोक्यौत्सुक्यादमरललना यान्ति मनसा**
**तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम्॥**

हे हिमालयकन्ये, विरिञ्चिप्रभृतिश्रेष्ठकवयस्तव सौन्दर्यवर्णनायां न कथमपि समर्था अभूवन्। अमरललनागणास्तु समुत्सूकचित्तास्तव तल्लोकातीतं सौन्दर्यमालोक्य कृच्छ्रसाध्यतपः साध्यत्वाद् दुष्प्राप्यां शिवसायुज्यमुक्तिं लभन्ते। भगवत्या ललितादेव्या निरतिशयसौन्दर्यस्य किञ्चिन्मात्रं लब्ध्वैव विष्णुमोहिनीमूर्तिधारणेन शङ्करमपि मोहितमकरोत्। अस्या एव कृपाकटाक्षेण मदनो जितेन्द्रियाणां मुनीनामपि मनोऽहरत्।

**हरिस्तामाराध्य प्रणतजनसौभाग्यजननीं**
**पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत्।**
**स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा**
**मुनीनामत्यन्तः प्रभवति हि मोहाय महताम्॥**

हे मातः। प्रणतजनगणस्य सौभाग्यदायिनीं, त्वमाराध्य विष्णुः पुरा नारी भूत्वा महायोगिनं त्रिपुरान्तकं महादेवमपि विक्षुब्धमकरोत्। कामदेवोऽपि त्वां नत्वा रतिनयनानन्दकरेण स्वशरीरेण महात्मनां मुनीनामन्तःकरणं मोहयितुं सक्षमोऽभवत्।

## श्री विद्याशक्तिः

तत्र संवादः—श्री देव्युवाच—

**देवेशं श्रोतुमिच्छामि श्रीविद्याविधिमुत्तमम्।**
**कथयस्व महाभाग यद्यहं तव वल्लभा॥**

श्री भैरव उवाच—

**शृणु देवि प्रवक्ष्यामि श्रीविद्यां मन्त्रनायिकाम्।**
**तस्याः स्वरूपं बहुधा तन्त्रेषु प्रतिपादितम्॥**
**कोटिशः शक्तिमन्त्रास्तु प्रसिद्धास्तेषु चोत्तमः।**
**श्रीविद्यामन्त्रराजोऽयं सोऽपि द्वादशधा स्थितः॥**
**तत्रापि द्वितयं श्रेष्ठं कादिर्हादिश्च सुन्दरि।**
**तत्र कादिः परो देवि तत्समो नैव विद्यते[१]॥**

पूर्वोल्लासे तंत्राणां सङ्ख्यादिकमुक्त्वा सर्वेषु तन्त्रेषु सात्त्विकादित्रिविधमपि विधानं त्रिविधमपि फलमस्तीत्युपसंहृतम्। तत्र क्वचित् किञ्चित् स्पष्टं किञ्चिदस्पष्टमिति चोक्तम्। तथा च यस्मिन् तन्त्रे यत् स्पष्टमुक्तं तत्तद् द्विविधं तन्त्रमित्युक्तं भवति। इदं हि तन्त्रं सात्त्विकत्वादुत्तमं ज्ञेयम्। अतएव ''यस्माच्च जायते देवि परमानन्दसंप्लवः'' इति प्रथमोल्लासे उक्तम्। युक्तं चैतत्, सुस्पष्टतया इतरानपेक्षतया सम्पूर्णकर्मानुष्ठानविधेः कथने तच्छ्रवणमात्रेण सुस्पष्टतयावभासात्। सर्वेषामात्मत्वेनातिस्पृहणीया याः/श्रीसुन्दर्याः सर्वोत्तमदेवतायाः सम्बन्धात्। तथा आद्यन्तयोर्मध्ये चाद्वितीयात्मत्वप्रतिपादनात् तज्ज्ञानोपयोगित्वेनैव कर्मोपासनयोर्निरूपणात् परमानन्दसम्प्लवोऽत्रैवास्तीति प्रसक्तनिरूपणानन्तरं, प्राक् पृष्टं सुन्दर्यास्तन्त्रं पुनः पुनः प्रष्टुं श्रीदेव्युवाचेति। उत्तमम् असम्पूर्णमिश्रितादिदोषरहितम्॥

उत्तरं वक्तुमुपक्रमते श्री भैरव उवाचेति। श्रीविद्यां विद्यासु श्रेष्ठाम् अत एव मन्त्रनायिकाम्। स्वरूपं ध्यानोक्तं स्थलं रूपम् सूक्ष्मं मन्त्रात्मकं च। सूक्ष्मरूपस्य बहुधात्वेऽपि तस्यैव तत्र मुख्यत्वं वक्तुमुपक्रमते—कोटिश इति। प्रसिद्धाः, तन्त्रेष्विति शेषः। द्वादशधा मनुचन्द्रादिभेदात्। स्थितः ज्ञानार्णवादिषु॥

तत्रापि द्वादशेष्वपि कादिः कामराजविद्या हादिर्लोपामुद्रा विद्या। तत्र तयोर्मध्ये कादिः परः श्रेष्ठः[२]।

एतस्य श्रेष्ठत्वं च श्रीभास्कराचार्यैर्वरिवस्यरहस्यादौ बहुतरहेतुप्रतिपादनपूर्वकं निरूपितम्।

## अन्याः शक्तयः

तन्त्रागमशास्त्रेषु शक्तेः अनेकानि नामानि कार्यभेदात् अवस्थाभेदाच्च समुपलभ्यन्ते। समेषां नाम्नां पारिभाषिकार्थाः सन्ति। तत्र तन्त्रागमाचार्यैः शक्तेः स्वरूपसमुपबृंहणाय तेषु तेष्वर्थेषु पारिभाषितानि। अतएवात्र क्रमेण शक्तिवाचकशब्दानां पारि-

१. परमानन्दतन्त्रम्—नवमं पुष्पम् पृ० १७ २. तथैव ३/१७

भाषिकार्थाः विमृश्यन्ते। तत्रादौ ललितासहस्रनामतः शक्तिवाचकशब्दानां पारिभाषिकार्थाः निरूप्यन्ते। ततः संगृहीताः व्याख्यायमाणाः शब्दाः यथा—

| | | |
|---|---|---|
| (१) श्रीमाता | (२) शिवा | (३) कामाक्षी |
| (४) महाशक्ति | (५) कुण्डलिनी | (६) भवानी |
| (७) श्रीकरी | (८) नित्या | (९) निराकारा |
| (१०) निर्गुणा | (११) दुर्गमा | (१२) दुर्गा |
| (१३) सर्वज्ञा | (१४) सर्वमङ्गला | (१५) निरञ्जना |
| (१६) महामाया | (१७) महाशक्ति | (१८) सर्वेश्वरी |
| (१९) माहेश्वरी | (२०) महालक्ष्मी | (२१) पार्वती |
| (२२) ब्रह्मरूपा | (२३) सहस्राक्षी | (२४) नारायणी |
| (२५) ह्रींकारी | (२६) वाग्वादिनी | (२७) परा |
| (२८) वैखरी | (२९) मूलप्रकृति | (३०) शिवाराध्या |
| (३१) गायत्री | (३२) सन्ध्या | (३३) सिद्धविद्या |
| (३४) त्रिलोचना | (३५) सिद्धेश्वरी | (३६) रक्तवर्णा |
| (३७) शुक्लवर्णा | (३८) स्वाहा | (३९) स्वधा |
| (४०) श्रुति | (४१) श्रीविद्या | (४२) गोमाता |
| (४३) आदिशक्ति | (४४) आत्मा | (४५) क्लींकारी |
| (४६) त्रिपुरा | (४७) उमा | (४८) वागधीश्वरी |
| (४९) ज्ञानदा | (५०) योगिनी | (५१) योगानन्दा |
| (५२) अन्नदा | (५३) ब्राह्मणी | (५४) ब्राह्मी |
| (५५) राज्यदायिनी | (५६) राजराजेश्वरी | (५७) सावित्री |
| (५८) सरस्वती | (५९) ईं | (६०) गौरी |
| (६१) गणाम्बा | (६२) चित्कला | (६३) मुक्तिदा |
| (६४) महाकाली | (६५) महाशना | (६६) अपर्णा |
| (६७) चण्डिका | (६८) सुभगा | (६९) त्र्यम्बिका |
| (७०) शुद्धा | (७१) यज्ञरूपा | (७२) महती |
| (७३) विरजा | (७४) प्रत्यग्रूपा | (७५) पराकाशा |
| (७६) प्राणदा | (७७) परापरा | (७८) कलानिधि |
| (७९) रसज्ञा | (८०) परंज्योति | (८१) पूज्या |
| (८२) परात्परा | (८३) सती | (८४) ब्रह्म |
| (८५) जननी | (८६) प्रचण्डा | (८७) आज्ञा |
| (८८) मन्त्रसारा | (८९) अकान्ता | (९०) अजा |
| (९१) वैष्णवी | (९२) कूटस्था | (९३) नादरूपिणी |

(९४) बैन्दववासिनी (९५) प्रगल्भा (९६) पञ्चमी
(९७) शाश्वती (९८) धरा (९९) धन्या
(१००) सर्वातीता (१०१) बाला (१०२) पूर्वजा
(१०३) अम्बा (१०४) अनघा (१०५) श्रीविद्या
(१०६) श्रीचक्रराजनिलया (१०७) ज्ञानगम्या (१०८) ललिताम्बिका[1]

**मंत्रः—ॐ ऐं ह्रीं श्रीं ललिताम्बिकायै नमः।**

**ध्यान**—सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्। पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम्॥

**(१) श्रीमाता**

अभियुक्तानां नाम श्रीपदपूर्वं प्रयुञ्जीत। मातेति पदमात्रस्य (सर्वेषां) उत्पादिका इत्यर्थः ''यतो वा इमानि भूतानि जायन्ते'' इत्यविशेषश्रुतेः।

**(२) शिवा**

(१) वशकान्तौ शिवः स्मृतः'' इति।
कान्तिः इच्छा परशिवेच्छारूपेत्यर्थः।
इच्छारूपायाः शक्तेः शिवाधारकत्वादिति भावः।
(२) शिवं करोति इति वा।
(३) शेते अस्मिन् सर्वं इति वा।
(४) शिवाः शोभनाः गुणाः अस्याः सन्ति इति वा।
(५) शाम्यतीति शिवः।
(६) शिवाभेदा वा शिवा।
तद् भेदस्य प्रवृत्तिनिमित्तता च लिङ्गपुराणे दर्शिता—
''यथा शिवस्तथा देवी यथा देवी तथा शिवः। तस्मादभेदबुद्ध्यैव शिवेति कथमन्वयुमाम्।''
(७) शिवं मोक्षं ददाति इति शिवा।
एवमिच्छादि धर्मरूपापि न धर्मिणं प्रति गुणभूतेत्याह।

**(३) कामाक्षी**

(१) कामे कमनीये अक्षिणी यस्याः।
(२) कामेश्वर एव नेत्रं यस्याः इति वा।
(३) काञ्ची पीठाधिष्ठात्र्याः इदं साधारणं नाम।

**(४) महाशक्तिः**

महे उत्सवे तत्रत्यशिवशक्तिसमायोगरूपे आसक्तिः तत्परता यस्याः।

---

१. ललितासहस्रनाम

**(५) कुण्डलिनी**

(१) कुण्डले अस्याः स्त इति।

(२) आकृत्या भुजङ्गी वा।

**(६) भवानी**

भवं महादेवं ससारं कामं वा आनयति जीवयतीति भवानी।

**(७) श्रीकरी**

(१) करोतीति करी। श्रियः करी श्रीकरी।

(२) श्रीकरो विष्णुः तस्येयं श्रीकरोति वा।

**(८) नित्या**

कालत्रयेऽत्यबाधा।

**(९) निराकारा**

अकारस्य सगुणरूपस्य कल्पितत्वान्निराकारा।

**(१०) निर्गुणा**

गुणशून्यत्वान्निर्गुणा। सावयवमेव ब्रह्मेति मतं निरसितुमाह।

**(११) दुर्गमा**

अतएव दुर्गमा, अधिगन्तुमशक्यत्वात्।

**(१२) दुर्गा**

(१) दुर्गमाख्यदैत्यवधप्रयोजिकेति यावत्। अतएव दुर्गा।

(२) नववर्षा कन्यापि दुर्गेत्युच्यते। तेन तद्रूपा।

**(१३) सर्वज्ञा**

सर्वं जानातीति सर्वज्ञा।

**(१४) सर्वमङ्गला**

(१) सर्वाणि मङ्गलानि यस्याः।

(२) भक्तानामार्तिहारिणी तेनेयं सर्वमङ्गला॥

**(१५) निरञ्जना**

अञ्जनं नाम कालिमा।

**तमोरूपत्वेनावरणधर्मेण सादृश्यात्। निर्गतं अञ्जनं यस्याः सा।**

**(१६) महामाया**

**महान्ति सत्त्वानि यस्याः।**

**(१७) महाशक्तिः**

**महती सर्वजगन्निर्वाहकत्वादिरूपा विस्तृता विविधा च शक्तिः सामर्थ्यं यस्याः सा।**

**( १८ ) सर्वेश्वरी**

सर्वैः स्वामित्वात् सर्वेश्वरी।

**( १९ ) माहेश्वरी**

यो वेदादौ स्वरः प्रोक्तौ वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः। इति श्रुतिप्रसिद्धस्य महेश्वरस्य त्रिगुणातीतत्वं शक्यतावच्छेदकम्। तस्येयं माहेश्वरी।

**( २० ) महालक्ष्मी**

महती च सा देवी च महादेवी।

महत्त्वं च प्रमाणागम्यशरीरवत्वम्।

**( २१ ) पार्वती**

हिमवत्पर्वतस्यापत्यत्वात् पार्वती।

**( २२ ) ब्रह्मरूपा**

ब्रह्मा चतुर्मुखः तादृश ईश्वरः स एव रूपं यस्या।

**( २३ ) सहस्राक्षी**

सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् इति श्रुतौ सहस्रशब्दः अनन्तपरः। शीर्षशब्दः मुखादेरूपलक्षणम्।

**( २४ ) नारायणी**

(१) नरस्य अपत्यं इत्यर्थे नारायणः शिवो विष्णुर्वा, तस्येयं नारायणी।

(२) आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ता तस्मात्
तेन नारायणः स्मृतः।

(३) नराज्जातीनि तत्त्वानि नारायणीति विदुर्बुधाः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः।

इत्युक्तस्य नारायणस्य परमशिवस्य स्त्री नारायणी। नारायण भगिनीत्यर्थः।

**( २५ ) ह्रींकारी**

(१) ह्रीं लज्जां करोतीति ह्रींकारी।

(२) सृष्टिस्थितसंहाराः तदर्थत्वेन पर्यवस्यन्ति, तान् करोतीति ह्रींकारी।

(३) भुवनेश्वरी बीजस्वरूपा।

**( २६ ) रामा**

(१) रामा स्त्रीमात्रस्वरूपा।

(२) रमन्ते अस्यां योगिनः इति वा।

वाग्वादिनी— वाचं वदतीति वाग्वादिनी (काचिद् देवता) तद्रूपा। वाचं वादयतीति वा।

## ( २७ ) परा

प्रलये सृज्यमान प्राणिकर्मणा अपरिपाकदशायां ( तादृशकर्माविच्छिन्न माया-वच्छिन्न) ब्रह्म।

(१) ''घनीभूतम्'' इत्युच्यते। कालवशात् कर्मणां परिपाके सति विनस्य-दवस्थः परिपाकप्रागभावः। (२) ''विचिकीर्षा इत्युच्यते ततः परिपाकक्षणे मायावृत्तिरुत्पद्यते। तादृशं परिपक्वकर्माकारपरिगणितमायाविशिष्टं ब्रह्म अव्यक्त-पदवाच्यम् अतएव तस्योत्पत्तिरपि स्मर्यते, ''तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम'' इति। स एव जगदङ्कुरकन्द-रूपत्वात्। (३) कारणविन्दु ''पदेन व्यवह्रियते। तदुक्तं प्रपञ्चसारे-विचिकीर्षघनीभूता सा चिदभ्येति बिन्दुताम्'' इति। अस्माच्च कारणविन्दोः सकाशात् क्रमेण (४) कार्यबिन्दुः ततो (५) नादः ततो (६) बीजम् इति त्रयमुत्पन्नम्।

एते च कारणबिन्द्वादयः चत्वारः अधिदैवतं, अव्यक्त ईश्वरहिरण्यगर्भविराट् स्वरूपाः। अधिभूतं तु कामरूप-पूर्णगिरि-जालन्धर-ओड्याणपीठरूपाः। अध्यात्मं तु कारणविन्दुः मूलाधारस्थः।

अयमेव च यदा कार्यबिंद्वादित्रयजननोन्मुखो भिद्यते, तादृशायां अव्यक्त-शब्दब्रह्माभिधेयो रवः तत्रोत्पद्यते। तदिदं कारणबिन्द्वात्मकं अभिव्यक्तं शब्द ब्रह्म स्वप्रतिष्ठतया निष्पन्नम्। तदेव ''परा वाक्'' इत्युच्यते।

अथ तदेव शब्दब्रह्मनाभिपर्यन्तमागच्छता तेन पवनेन अभिव्यक्तं कार्यबिन्दुमयं सत् ''पश्यन्ती वाक्'' इत्युच्यते। अथ तदेव शब्दब्रह्म तेनैव वायुना हृदयपर्यन्तं अभिव्यज्यमाने ''मध्यमावाक्'' इत्युच्यते। अथ तदेव वदनपर्यन्तं तेनैव वायुना कण्ठादिस्थानेषु अभिव्यज्यमानं श्रोत्रग्रहणयोग्यस्पष्टप्रकाशरूपबीजात्मकं सत् ''वैखरी वाक्'' इत्युच्यते।

इत्थं चतुर्विधासु मातृकासु परादित्रयम् जानन्तो मनुष्याः स्थूलदृशः वैखरीमेव वाचं मन्यन्ते।

## ( २८ ) वैखरी

विशेषण स्वरः कठिनः तस्येयं वैखरी, सैव रूपं यस्याः।

## ( २९ ) मूलप्रकृतिः

(१) मूलस्य श्रीविद्यामन्त्रस्य प्रकृतिः कारणभूतं प्रकाशविमर्शाख्याक्षर-द्वयरूपा।

(२) साङ्ख्यमतप्रसिद्धा वा मूलप्रकृतिः।

(३) कुण्डलिन्येव अष्ट प्रकृतिरूपा मूल प्रकृतिरित्युच्यते। तेन तद्रूपा वा।

(४) अथवा पृथिव्यादीनां आकाशान्तानां मध्ये पूर्वस्य विकृतिभूतस्य उत्तरोत्तर-भूतं प्रकृतिरित्यर्थः।

अत्रेदं बोध्यम्—नियतकालपरिपाकानां हि कर्मणां मध्ये परिपक्वान्नं उपभोगेन

क्षयात्, इतरेषां च पक्वान्नानां भोगसम्भवेन तदर्थायाः सृष्टेः अनुपयोगात् प्राकृतप्रलयो भवति। तदाग्रस्तसमस्तप्रपञ्चा माया स्वप्रतिष्ठे परमशिवे निष्कले विलीना सती यावदवशिष्टकर्मपारिपाकं तथैव तिष्ठति। तदुक्तं विष्णुपुराणे—

**प्रलये व्याप्यते तस्यां चराचरमिदं जगत्।**
**जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।**
**तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते॥**
**वायु प्रलीयते व्योम्नि तदव्यक्ते प्रलीयते।**
**अव्यक्तं पुरुषं ब्रह्मन् निष्कले सम्प्रलीयते॥**

अव्यक्तं माया। तस्याश्च लयो नाम मुक्ताविव नात्यन्तिको नाशः किन्तु सुषुप्तौ अन्तःकरणवृत्तीनामिव मायावृत्तीनामनुदयात्, अत्यन्तनिर्विकल्पात्मनः परमात्म-प्रकाशस्य बलात् भानसत्वेऽपि अप्रतिभासप्रायत्वम्। सर्वथा भानाभावे वस्तुन एवा-भावापत्तेः, इष्टापत्तौ उत्तरत्र सर्गानुपपत्तेः। अवशिष्टैः प्राणिकर्मभिश्च तस्यां मायायां विलीयैव क्रमेण प्राप्तपरिपाकैः स्वफलप्रदानाय परशिवस्य सिसृक्षात्मिका माया-वृत्तिरुपपद्यते। तादृशवृत्तिविषयतया सविकल्पकत्वेन मायया यत् स्फुरणं सोऽयम् बुद्धिपूर्वकः।

(१) तमसः सर्गः प्रथमः। एतस्मात् अविभागापन्नगुणत्रयात् अव्यक्ततम पदवाच्यात् अन्तर्विभागस्थगुणत्रयात्मकस्य ईषद् व्यक्तस्य।

(२) महतः सर्गो द्वितीयः तस्मात् बहिर्विभागगुणत्रयावस्थस्य।

(३) अहङ्कारस्य सर्गः तृतीयः। "वैकारिकस्तैजसश्च भूतादिश्चैव तामसः। त्रिविधोऽयमहङ्कारो महत्तत्वादजायत॥" इति वचनात्। अत्र भूतादेः तामसत्वेन विशेषणात्, अन्ययोः सात्विकराजसत्वे सूचिते। तत्र भूतादेः तामसत्वेन विशेषणा-दन्ययोः सात्त्विकराजसत्वे सूचिते। तत्र भूतादिनामकात् तामसात् अहङ्कारात्-रजसाऽवष्टब्धात्।

४. पञ्चतन्मात्राणां सर्गश्चतुर्थः। वैकारिकनाम्नः सात्त्विकादहङ्कारात् रजसोऽ-वष्टब्धात्।

५. एकादशेन्द्रियगणस्य सर्गः पञ्चमः। राजसात् तैजसादहङ्कारात्।

६. उभयाधिष्ठातृदिग्वातार्कप्रचेतोऽख्यादिदेवता सर्गः षष्ठः। एते च षट् सर्गाः प्राकृताः वृक्षादिः ऊर्ध्वस्रोतोरूपः, पश्वादितिर्यक्स्रोतोरूपः, भूतप्रेतादिः अर्वाक्स्रोतः इति त्रयो वैकृताः। प्राकृतवैकृतात्मक एकः कौमारसर्ग इति। एवं च अव्यक्तादि-सर्गाणां मध्ये उत्तरोत्तरस्य पूर्वपूर्वप्रकृतिः। अव्यक्तस्य तु ब्रह्मैव प्रकृतिरिति सर्वसृष्टीनां मूलभूतत्वात् तस्य मूलान्तराभावाच्च मूलप्रकृतिरित्यर्थः।

**(३०) शिवाराध्या**

शिवेन आराध्या उपास्या।

**( ३१ ) गायत्री**

(१) चतुर्विंशत्यक्षरं छन्दः गायत्री।

(२) गायन्तं त्रायते यस्माद् गायत्री तेन कथ्यते। इति गायत्रीकल्पे भारद्वाजस्मृत्युक्तनिर्वचनात् वेदमातरि प्रसिद्धौ गायत्रीशब्दः, तदभेदात् अम्बाया अपि वाचकः।

**( ३२ ) सन्ध्या**

आदित्यावच्छिन्नचैतन्यस्य स्वस्य च अभेदभावनः सन्ध्यापदार्थः। तदभेदात् इयमपि सन्ध्या।

**( ३३ ) सिद्धविद्या**

सिद्धा चा सा विद्या सिद्धविद्या।

**( ३४ ) त्रिलोचना**

त्रीणि लोचनानि यस्याः।

**( ३५ ) सिद्धेश्वरी**

गोरक्षप्रमुखानां सिद्धानां ईश्वरी स्वामिनी। एतन्नाम्नैव काश्यां प्रसिद्धा।

**( ३६ ) रक्तवर्णा**

रक्तो वर्णो यस्याः।

**( ३७ ) शुक्लवर्णा**

शुलो वर्णो यस्या।

**( ३८ ) स्वाहा**

**( ३९ ) स्वधा**

**( ४० ) श्रुति**

**( ४१ ) श्रीविद्या**

श्रीविद्या पञ्चदशी स्वरूपा।

**( ४२ ) गोमाता**

गवां धेनुनां माता जन्मभूः उत्पत्तिस्थानम्।

**( ४३ ) आदिशक्तिः**

सर्वजगतां उत्पादकत्वात् आदिकारणाभूता च सा शक्तिश्च।

**( ४४ ) आत्मा**

आत्माशब्देन जीवः, परमशब्दोत्तरं च आत्मानुषङ्गात् परमात्मा च, इति नामद्वयेन कथ्यते।

**( ४५ ) क्लींकारी**

(१) कामबीजं करोति इति।

(२) कामबीजस्वरूपा इति वा।

(३) क्लीङ्कारस्य शिवकामस्य स्त्री इति वा क्लीङ्कारी।

**( ४६ ) त्रिपुरा**

तिसृभ्यो मूर्तिभ्यः पुरातनत्वात् त्रिपुरा। ''यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः।'' इति लघुस्तवे।

**( ४७ ) उमा**

(१) उकारः शिववाचकः, तस्य मा लक्ष्मीः।

(२) ऊं परं शिवं माति परिच्छिनत्तीति वा।

(३) उ इत्यामन्त्रणे। मा इति निषेधे। बाह्ये तपस्यन्ती भगवती मात्रा आमन्त्रय निषिद्धा इत्युमा वा।

**( ४८ ) वागधीश्वरी**

वाचामधीश्वरी स्वामिनी।

**( ४९ ) ज्ञानदा**

ज्ञानं कैवल्यं प्रदत्वेनाभिमतं ददातीति ज्ञानदा।

**( ५० ) योगिनी**

**( ५१ ) योगानन्दा**

(१) योगः शिवशक्तिसामरस्यमेव आनन्दः यस्याः।

(२) निद्रायाः आनन्दप्रधानत्वात्, योगनिद्रेति वाऽर्थः, सा च देव्येवेयम्।

**( ५२ ) अन्नदा**

अन्नं जनेभ्यो ददाति।

**( ५३ ) ब्राह्मणी**

शिवस्य ब्राह्मत्वजातिमत्वात् ब्राह्मणी।

**( ५४ ) ब्राह्मी**

अविद्यातिरिक्तजड़जातिवद्भावे मानाभाव इत्यत आह-ब्राह्मी। वागात्मिका वा।

**( ५५ ) राज्यदायिनी**

राज्यं स्वराज्यं वैकुण्ठकैलासाधिपत्यादिकं दातुं शीलमस्याः।

**( ५६ ) राजराजेश्वरी**

राज्ञां देवराजादीनां ये राजानः ब्रह्माविष्णुरुद्राः तेषामपीश्वरी।

**( ५७ ) सावित्री**

सवितुः जगत्प्रसूतेः परशिवस्येयं सावित्री।

**( ५८ ) सरस्वती**

सरस्वती ज्ञानाभिमानिनी देवता। ज्ञानसमुद्ररूपेत्यर्थः। विषयानवच्छिन्नज्ञान-रूपेति यावत्। घटादि जडपदार्थनिर्णये मोहस्यायोगेऽपि, अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः। इति वचनेन ज्ञानरूपाद्वैतविषये—

ज्ञानावरणस्यावश्यकत्वात् तन्निर्णये सर्वानर्थनिरासकपरमपुरुषार्थरूपे पापात्म-कानां भगवत्प्रसादविधुराणां मोह आवश्यक इति भावः।

**( ५९ ) ई**

ई तुर्यस्वरूपं एकाक्षरं कामकलासंज्ञकं इदं नाम। विष्णुपरात् प्रथमस्वररूपात् अकारात् अस्य भगिनी ई इति। विष्णुसम्बन्धिभगिनीत्वविशिष्टा इति अक्षरार्थः।

**( ६० ) गौरी**

गौरवर्णत्वात् गौरी।

**( ६१ ) गणाम्बा**

गणस्य प्रमथादेः गजाननस्य वा अम्बा।

**( ६२ ) चित्कला**

चिदेव कला सच्चिदानन्दात्मनो ब्रह्मणः एकदेश इव यस्या सा।

**( ६३ ) मुक्तिदा**

मोक्षं ददातीति मुक्तिदा।

**( ६४ ) महाकाली**

महती च सा काली च। कालयतीति काली। कालेन महत्त्वं तु मृत्योरपि कालनात्।

**( ६५ ) महाशना**

महत् चराचरकर्मकत्वात् अशनं यस्याः।

**( ६६ ) अपर्णा**

( १ ) अपगतं ऋणं यस्याः, सा अपर्णा।

( २ ) पर्णं पतनम् इति नैरुक्त्यात्, पतनरहितेति वा।

**( ६७ ) चण्डिका**

अभक्तेषु कोपनत्वात् चण्डिका।

**( ६८ ) सुभगा**

(१) पञ्चवत्सरा कन्या सुभगेत्युच्यते। तदभिन्ना।

(२) यद्वा, लोकत्रयान्तर्गतं सौभाग्यं चरमचरगतं वा अस्या एव रूपमिति सुभगा।

**( ६९ ) त्र्यम्बिका**

त्रीणि अम्बिकानि नेत्राणि यस्याः। सोमसूर्यानलास्त्रीणि यन्नेत्राण्यम्बिकानि सा। तेन देवी त्र्यम्बकेति मुनिभिः परिकीर्तिता।

**( ७० ) शुद्धा**

अविद्यैकमालिन्यशून्या।

**( ७१ ) यज्ञरूपा**

(१) ''यज्ञो वै विष्णु'' इति श्रुतेः, तदभिन्ना, देवी यज्ञरूपा।

**( ७२ ) महती**

(१) परममहत्परिमाणत्वात्।

(२) नारदमुनेः वीणाविशेषोऽपि महती। तत्स्वरूपा वा।

**( ७३ ) विरजा**

विगतं रजः पापं यस्याः। ''विरजे नमः'' इति प्रयोगः।

**( ७४ ) प्रत्यग्रूपा**

प्रतिकूलं अञ्चतीति प्रत्यक् तादृशं रूपं यस्याः। इन्द्रियाणां विषयोन्मुखत्वं बहिर्मुखत्वं पराङ्मुखत्वं चेत्युच्यते। तत्परित्यागेन अन्तरात्मोन्मुखत्वं अन्तर्मुखत्वं प्रत्यङ्मुखत्वं चोच्यते। प्रत्यगवलोक्य मानस्वरूपा इति यावत्।

**( ७५ ) पराकाशा**

(१) परः उत्कृष्टश्चासौ आकाशश्च पराकाशः निर्गुणत्वात्। (स्त्रीलिङ्गे परावकाशा इति)। परब्रह्मेत्यर्थः।

(२) अथवा, ''परमे व्योमन् प्रतिष्ठिता'' इत्यादिश्रुतिसिद्धव्योमब्रह्माण्ड-पिण्डाण्डभेदेन द्विविधमपि, पराकाशः ब्रह्माभिव्यक्तिस्थानम्, तद्रूपा।

**( ७६ ) प्राणदा**

(१) प्राणान् पञ्चवृत्तिकान् एकादशेन्द्रियाणि वा आदत्ते।

(२) प्राणान् द्यति खण्डयतीति वा।

**( ७७ ) परापरा**

(१) परशब्दः अपरशब्दः परापरशब्दो वा यस्य वाचकः तत्स्वरूपत्वात् परापरा।

(२) परोऽन्यः। अपरः तद्भिन्नत्वात् निकृष्टः।

(३) यद्वा, परः उत्कृष्टः। अपरो निकृष्टः।

(४) परो वैरी। अपरो मित्रम्।

(५) परो दूरस्थः। अपरोऽन्तिकस्थः।

(६) ब्रह्मं द्विविधं केवलशब्दभेदात् क्रमेण परमपरमुच्यते।

**( ७८ ) कलानिधि**

कलानां नानाविधतया पूर्ववर्णितानां निधिः।

**( ७९ ) रसज्ञा**

रसान् शृंगारादिभेदेन दशविधान् जानातीति रसज्ञा।

**( ८० ) परंज्योतिः**

परं उत्कृष्टं ब्रह्मात्मकं ज्योतिः।

**( ८१ ) पूज्या**

अतएव सर्वेषां पूज्या पूजयितुं योग्या प्रतीक्ष्या वा।

**( ८२ ) परात्परा**

परात् उत्कृष्टात् ब्रह्माविष्णुरुद्रादपि परा श्रेष्ठतरा।

**( ८३ ) सती**

(१) पातिव्रत्यात्तद्रूपत्वाच्च सती।

(२) दाक्षायण्या इदं नाम।

**( ८४ ) ब्रह्म**

ब्रह्म यत् मुक्तप्राप्यं तत् स्वात्माभिन्नं ज्ञानम्।

**( ८५ ) जननी**

सर्वप्रपञ्चस्य उत्पादकत्वाद् जननी।

**( ८७ ) आज्ञा**

आज्ञा, वेदे प्रवर्तनानिवर्तनापरपर्यायभगवदिच्छारूपा।

**( ८८ ) मन्त्रसारा**

**शास्त्रशब्दो** वेदपरः, तदनुसारि मीमांसादिपरो वा। मन्त्रशब्दोऽपि वेदपरः, तांत्रिकमनुपरः, तत्प्रतिपादकचतुःषष्टितन्त्रपरो वा।

**( ८९ ) अकान्ता**

अकान्तेति त्र्यक्षरं नाम। "अकं पापे च दुःखे च।" तयोः अन्तः नाशः यया सा।

**( ९० ) अजा**

जन्मराहित्यात् अजा।

**( ९१ ) वैष्णवी**

विष्णोरियं वैष्णवी। तथा च देवीपुराणे—

**"शङ्खचक्रगदां धत्ते विष्णुमाता तथाऽरिहा।**
**विष्णुरूपाऽथवा देवी वैष्णवी तेन गीयते॥"**

अत्र चतस्रो व्युत्पत्तयः सूचिता।

**( ९२ ) कूटस्था**

(१) कूटयति छत्रयति आत्मानमानन्दादिकमावृत्य संसारे पातयतीति कूटं अज्ञानं, तदध्यक्षतया तत्र तिष्ठति।

(२) कूटस्य अज्ञानस्य स्था स्थितिर्यस्यां वा।

(३) कूटो गिरिश्रृंगम्, तद्वत् निष्क्रियतया तिष्ठतीति वा।

(४) कूटानां विश्वसमूहानां स्थितिर्यस्यां वा।

(५) वाग्भवादिकूटत्रये तिष्ठतीति वा॥

**( ९३ ) नादरूपिणी**

(१) नादः प्रणवः शिरः स्थितः, तद्रूपा वा।

(२) नादो रूपं अस्या वा।

**( ९४ ) वैन्दववासिनी**

(१) भ्रुवोरुपरिभागे वृत्तसन्निवेशो बैन्दवः, तदासनं यस्याः।

(२) बिन्दुसम्बन्धिचक्रं सर्वानन्दमयाख्यमेव आसनं यस्या वा।

**( ९५ ) प्रगल्भा**

सृष्ट्यादिकर्मसु प्रौढत्वात् प्रगल्भा।

**( ९६ ) पञ्चमी**

**(१) ब्रह्मादिषु पञ्चसु पञ्चमस्य सदाशिवस्य स्त्री।**

**(२) पञ्चमी शब्दो वाराह्यां निरूढो वा।**

**(३) कैवल्याख्या, पञ्चमी मुक्तिः, तदभिन्ना वा।**

**( ९७ ) शाश्वती**

शश्वत् पौन:पुन्यम् तत्सम्बन्धिनी पुनः पुनः अभ्यस्यमाना इत्यर्थः, नित्या वा।

**( ९८ ) धरा**

पृथिवी स्वरूपा, सर्वस्य जगतो धारणाद्वा।

**( ९९ ) धन्या**

धन्या कृतार्थाः, धनस्य हिता वा, धनं लब्ध्री वा।

**( १०० ) सर्वातीता**

सर्वमतीता वा, सर्वान् शब्दान् अतीता वा।

**( १०१ ) बाला**

बाला कुमारी।

**( १०२ ) पूर्वजा**

पूर्वजाता।

**( १०३ ) अम्बा**

ईदृशस्य गुणत्रयस्यापि माता कारणभूता।

**( १०४ ) अनघा**

अं अहो दु:खव्यसनानि अघानि न सन्ति यस्यां सा अनघा।

**( १०५ ) श्रीशिवा**

श्रीयुक्ता शिवा श्रीशिवा।

**( १०६ ) श्रीचक्रराजनिलया**

श्री चक्रराजबिन्दुत्रिकोणादिरूपं निलयो वासस्थानं यस्याः।

**( १०७ ) ज्ञानगम्या**

ज्ञानेन गम्या, प्राप्या।

**( १०८ ) शिवशक्त्यैकरूपिणी**

शिवशक्त्योरैक्यं सामरस्यमेव रूपं यस्या।

**( १०९ ) ललिताम्बिका**

ललते असौ ललिता। ललिता च सा अम्बिका च ललिताम्बिका इति विग्रहः।

**"लोकानतीत्य ललते ललिता तेन[१] सोच्यते।"**

---

१. ललितासहस्रनाम

## कालीतत्त्वम्

**( १ ) कलक्षेपे**

कलयति स्वात्माभेदेन स्थितं प्रमातृप्रमाणप्रमेयरूपं विश्वं बहिर्भावेनोल्लासयतीति परा संविद्देवी काली इत्युच्यते।

**( १ ) कलगतौ ( ज्ञाने )**

"कलयति— स्वात्मबहिर्भावेनावभासितमपीदं मातृमानमेयात्मकं जगत् स्वात्माभेदेनैव परामृश्यतीति परैव संविद्देवी काली इत्युच्यते।"

**( ३ ) कल सङ्ख्याने**

एवं कलयति—भेदतमपि मातृमेयादिकं जगद्रूपमर्थं परम्पराऽपोहनात् "अयं घटः न पटः" इति प्रतिनियतरूपतया अवस्थापयति—इति परैव चिल्लहरी संवित्-काली-इत्युच्यते।"

**( ४ ) कलगतौ ( प्राप्तौ च )**

"कलयति-यया मातृमानमेयात्मको भेदितोऽर्थः स्वसंवित्ति-मकुरे स्वात्म-व्यतिरिक्तत्वेऽपि अव्यतिरेकेण, स्वरूपारोहितत्वेनैवावस्थापयतीति परा काल-संकर्षिणी देवी काली—इत्युच्यते।"

**( ५ ) कल शब्दे**

"कलयति समस्तानामविकल्पसविकल्पादीनां ज्ञानानां सृष्टिस्थितिसंहारेऽपि धानानुग्रहात्मकपञ्चकृत्यत्वानुसंधानेन स्वात्मपरामर्शशेषतयैव सर्वं परामृशतीति परैव संवित् काली-इत्युच्यते।"

**( १ ) सृष्टिकाली**

**कौलार्णवानन्दघनोर्मिरूपामुन्मेषमेषोभयभाजमन्तः ।**
**निलीयते नीलकुलालये या तां सृष्टिकालीं सततं नमामि॥**

या (परप्रमातृरूपा संविद्देवी) नीलकुलालये निलीयते, तां कौल अर्णव-आनन्दघन-उर्मिरूपां (तथा) अन्तः उन्मेष-मेष-उभय-भाजम् सृष्टिकालीं सततं नमामि इति सम्बन्धः॥

**( २ ) रक्तकाली**

**महाविनोदार्पित मातृचक्रवीरेन्द्रकासृग्रसपानसक्ताम्।**
**रक्तीकृतां च प्रलयात्यये तां नमामि विश्वाकृतिरक्तकालीम्॥**

(अहं) महाविनोद-अर्पित-मातृ-चक्रवीरेन्द्रक-असृग्रस-पानसक्ताम्-प्रलय-अत्यये च रक्तीकृताम् तां विश्वाकृति-रक्तकालीं नमामि इति सम्बन्धः॥

**( ३ ) स्थितनाशकाली**

**वाजिद्वयस्वीकृतवातचक्रप्रकान्तसङ्घट्टगमागमस्थाम् ।**
**शुचिर्ययास्तं गमितोर्चिषा तां शान्तां नमामि स्थिति नाशकाली ॥**

यया अर्चिषा शुचिः अस्तंगमितः, तां वाजिद्वय-स्वीकृत-वातचक्रप्रकान्त-सङ्घट्ट-गमागमस्थां शान्तां स्थितनाशकालीं नमामि (अहम्) इति सम्बन्धः ।

**( ४ ) यमकाली**

**सर्वार्थसंकर्षणसंयमस्य यमस्य यन्तुर्जगतो यमाय ।**
**वपुर्महाग्रासविलासरागात्संकर्षयन्ती प्रणमामि कालीम् ॥**

(अहं) सर्वार्थसङ्कर्षणसंयमस्य यमस्य यन्तुः वपु, जगतः यमाय महाग्रासविलासरागात् सङ्कर्षयन्तीम् कालीं प्रणमामि-इति सम्बन्धः ।

**( ५ ) संहारकाली**

**उन्मन्यनन्ता निखिलार्थगर्भा या भावसंहारनिमेषमेति ।**
**सदोदिता सत्युदयायशून्यां संहारकालीं मुदितां नमामि ॥**

या (परादेवी) उन्मनी, अनन्ता, निखिल-अर्थगर्भा, सदोदिता सती, भावसंहारनिमेषम् एति (ताम्) उदयाय शून्यां मुदितां संहारकालीं नमामि इति सम्बन्धः ।

**( ६ ) मृत्युकाली**

**ममेत्यहं कारकलाकलापविस्फारहर्षोद्धतगर्वमृत्युः ।**
**ग्रस्तो यया घस्मरसंविदं तां नमाम्यकालोदितमृत्युकालीम् ॥**

यया (कालिकया) मम इति अहङ्कार-कला-कलाप-विस्फार-हर्ष-उद्धत-गर्वमृत्युः ग्रस्तः, ताम् अकाल-उदिताम् घस्मर-संविदं मृत्युकालीम् नमामि (अहम्) इति सम्बन्धः ।

**( ७ ) भद्रकाली**

**विश्वं महाकल्पविरामकल्प भवान्तभीमभ्रुकुटिर्भ्रमन्त्या ।**
**याश्चात्यनन्तप्रभावार्चिषा तां नमामि भद्रां शुभभद्रकालीम् ॥**

या अनन्तप्रभवा महाकल्पविरामकल्पभवान्तभीमभ्रुकुटिभ्रमन्त्या अर्चिषा विश्वम्, ताम् भद्रां शुभभद्रकालीं (अहं) नमामि इति सम्बन्धः ।

**( ८ ) मार्तण्डकाली**

**मार्तण्डमापीतपतङ्कचक्रं पतङ्गवत्कालकलेन्धनाय ।**
**करोति या विश्वरसान्तकां तां मार्तण्डकालीं सततं प्रणौमि ॥**

या (देवी) मार्तण्डम्, पतङ्गवत् कालकला-इन्धनाय, आपीत-पतङ्गचक्रं करोति, तां विश्वरस अन्तकां मार्तण्डकालीं सततं प्रणौमि ॥






**(९) परमार्थकाली**

**अस्तोदितं द्वादशभानुभाजि यस्यां गता भर्गशिखाशिखेव।**
**प्रशान्तधाम्नि द्युतिनाशमेति तां नौम्यनन्तां परमार्ककालीम्॥**

यस्याम् अस्तोदितद्वादशभानुभाजि प्रशान्त-धाम्नि भर्गशिखा, द्युतिनाशम् एति, एवं शिखा इव गता, ताम् अनन्तां परमार्ककालीं (अहं) नौमि, इति सम्बन्धः।

**(१०) कालाग्निरुद्रकाली**

**कालक्रमाक्रान्तदिनेशचक्रक्रोडीकृतान्ताग्निकलाप उग्रः।**
**कालाग्नि रुद्रो लयमेति यस्यां तां नौमि कालानलरुद्रकालीम्॥**

कालक्रम-आक्रान्त-दिनेशचक्र-क्रोडीकृत-अनन्ताग्निकलापः उग्रः कालाग्निरुद्रः यस्यां लयमेति तां कालानलरुद्रकालीं नौमि।

**(११) महाकालकाली**

**नक्तं महाभूतलये श्मशाने दिक्खेचरीचक्रगणेन साकम्।**
**कालीं महाकालमलं ग्रसन्तीं वन्दे ह्यचिन्त्यामनिलानलाभाम्॥**

महाभूतलये श्मशाने नक्तं दिक्खेचरीचक्रगणेन साकं महाकालम् अलं ग्रसन्तीम् अनिलाम् अनलाभाम् अचिन्त्याम् कालीम् वन्दे इति सम्बन्धः।

**(१२) महाभैरवघोरचण्डकाली**

**क्रमत्रयत्वाष्ट्रमरीचिचक्रसञ्चारचातुर्यतुरीयसत्ताम् ।**
**वन्दे महाभैरवघोरचण्डकालीं कलाकाशशशाङ्ककांतिम्॥**

क्रमत्रय-त्वाष्ट्र-मरीचिचक्र-सञ्चार-चातुर्य-तुरीय-सत्ताम् कला-आकाश-शशाङ्क-कान्ति महाभैरव-घोर-चण्डकालीम् (अहं) वन्दे।

## दुर्गाशक्तिः

**तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम्।**
**दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति॥**

तत्रैवेति। तस्मिन्नेवावतारे इत्यर्थः। दुः दुःखेन गम्यते प्राप्यते पुरोडाशादि भागोऽनेनेति दुर्गमः। गमेश्च पुंसि संज्ञायां धः प्रायेणेति धः। दुर्गम इति आख्या संज्ञा यस्य तम्। दुर्गो दुर्गम इति च नामद्वयमेकैवासुरस्येति दुर्गशब्दानुक्तेर्न्यूनता दूषणं न शङ्क्यमिति प्राञ्चः। दुर्गकोटि दुर्गमे स्यादिति हैमाद्दुर्गदुर्गमयोः पर्यायत्वाद्दुर्ग एव दुर्गमः। स आख्या अभिधानं यस्येत्यर्थान्न दोष इति गोविन्दराजः। तं दुर्गनामानं महासुरं वधिष्यामीत्यर्थः। वध हिंसायां ततो लृटि वधिष्यामीति रूपम्। ततस्तस्माद्-दुर्गवधाद्धेतोः विख्यातं प्रसिद्धं मे मम दुर्गादेवीति चतुरक्षरं नाम भविष्यति। दुर्गमसुरं आवेदयति रोदयति इति दुर्गादेवी। दिवु परिदेवने। ततः कर्मण्यन्तान्डीप्। अयं दुर्गमो रुरुपुत्रः पुरुषान्न मे मृतिरिति ब्रह्मणो लब्धवरः तद्वधार्थमस्या अवतारः।

भूतानि दुर्गा भुवनानि दुर्गा स्त्रियो नरश्चापि पशुश्च दुर्गा[१]।
यद् यद्धि दृश्यं खलु सैव दुर्गा दुर्गास्वरूपादपरं न किञ्चित्॥

## महाकालीशक्तिः

महाकाली भारती च मिथुने सृजतः सह[२]।
एतयोरपि रूपाणि नामानि च वदामि ते॥

**महाकालीति**। महाकाली च पुनः भारती महासरस्वती सह सार्धं मिथुने स्त्रीपुंसौ पृथक् पृथक् स्रजतः। उत्पादयामासतुः। सार्धं तु साकं सत्रासमं सहेत्यमरः। एतयोर्यमलं जातयोरपि रूपाणि नामानि च हे नृपेति संबोधनाध्याहारः। ते तुभ्यं वदामि कथयामीत्यन्वयः।



१. सप्तसती सर्वस्वम्-उपासना सूची।
२. तथैव प्रा० र० (प्राधानिकरहस्य) श्लोक २०।

# चतुर्थोऽध्यायः
# शक्तिपीठानां समीक्षणम्

## शक्तिपीठानां समीक्षणम्

देवीपीठसङ्ख्यानिरूपणमधिकृत्य नानापुराणेषु तन्त्रेषु च नानाप्रकारो मतभेदो दृश्यते। मत्स्यपुराणस्य त्रयोदशेऽध्याये, स्कन्दपुराणस्य अवन्त्यखण्डान्तर्गतरेवाखण्डे पीठानामुल्लेखो वर्तते। देवीभागवते च अष्टोत्तरशतपीठसङ्ख्या वर्तते। कति महापीठानि, कति उपपीठानि—तदुल्लेखो नास्ति। कालिकापुराणे (१८/४२-५१अध्याये) सत्यङ्ग-भूतमहापीठ-समूहस्य संक्षिप्तसङ्ख्या दृश्यते।

यथा—

**देवीकूटे पादयुग्मं प्रथमं न्यपतद् भुवौ।**
**उड्डियाने चोरुयुग्मं हिताय जगतां ततः॥**
**कामरूपे कामगिरौ न्यपतद् योनिमण्डलम्।**
**तत्रैव न्यपतद्भूमौ पूर्वतो नाभिमण्डलम्॥**
**जालन्धरे स्तनयुग्मं स्वर्णहारविभूषितम्।**
**अंशग्रीवं पूर्णगिरौ कामरूपात् ततः शिरः॥**
**यावद्ध्रुवं गते भर्गः समादाय सतीशवम्।**
**प्राच्येषु याज्ञिको देशस्तावदेव प्रकीर्तितः॥**

तथाहि प्रथमं देवीकूटनामकपर्वते सतीपादयुग्मं न्यपतत्। जगतां मङ्गलाय उड्डियाननामकस्थाने तस्या उरुयुग्ममपतत्। कामरूपे कामगिरौ नीलाचले देव्या योनिमण्डलं न्यपतत्। ततः पूर्वस्यां गुवाहाटी-नगरमध्ये भूतले नाभिमण्डलं न्यपतत्। स्वर्णहारभूषितस्तनयुग्मं जालन्धरे न्यपतत्। पूर्णगिरौ स्कन्धो ग्रीवा च न्यपतेताम्। मस्तकञ्च कामरूपस्य पूर्वसीमाप्रान्ते न्यपतत्। महादेवो हि सतीशवदेहं शिरसि विधृत्य पूर्वस्यां दिशि यावद्दूरमगमत्, तावत्पर्यन्तं याज्ञिकदेश इति कीर्त्त्यते।

**अन्ये शरीरावयवा लवशः खण्डिताः सुरैः।**
**आकाशगङ्गामगमत् पवनेन समीरिताः॥**
**यत्र यत्रापतन् सत्यास्तदा पादादयो द्विजाः।**
**तत्र तत्र महादेवः स्वयं लिङ्गस्वरूपधृक्॥**
**तस्थौ मोहसमायुक्तो सतीस्नेहवशानुगः॥**

**ब्रह्मा विष्णुः शनिश्चापि सर्वैर्देवगणैस्तथा।**
**पूजयाञ्चक्रुरीशस्य प्रीत्या सत्याः पदादिकम्॥**

सती देहस्यान्यान्यावयवास्तिलपरिमाणेन खण्डशः कृतास्ताः पवनप्रेरिता आकाशगङ्गायां प्रविष्टाः। हे द्विजाः तदा यत्र यत्र देव्याः पादाद्यङ्गानि निपतितानि तत्र तत्र सतीस्नेहविमूढो महादेवः स्वयं लिङ्गरूपेणावस्थानमकरोत्। तत्र प्रथमन्तु ब्रह्माविष्णुशनिरेवमन्ये च देवाः परमप्रीत्या सतीशिवयोः पादानि पूजयामासुः।

कस्मिन् पीठे देवी किंनामधारणेनावस्थिता प्रसिद्धा च तदकथयत्—

**देवीकूटे महादेवी महाभागेति गीयते।**
**सती-पादयुगे लीना योगनिद्रा जगत्प्रभुः॥**
**कात्यायनी चोड्डियाने कामाख्या कामरूपिणी।**
**पूर्णेश्वरी पूर्णगिरौ चण्डी जालन्धरे गिरौ॥**
**पूर्वान्ते कामरूपस्य देवी दिक्करवासिनी।**
**तथा ललिताकान्तेति योगनिद्रा प्रगीयते॥**

देवीकूटे सत्याः पादयुग्मे अधिष्ठिता जगदीश्वरी महादेवी योगनिद्रा महामाया (१) नाम्नाभिहिता। उड्डियाने (२) कात्यायनी (३) कामरूपे कामाख्या पूर्णगिरौ (४) पूर्णेश्वरी जालन्धरपर्वते (५) चण्डी कामरूपस्य पूर्वसीमाप्रान्ते देवी दिक्करवासिनी (६) तथा (७) ललिताकान्ता चेति योगनिद्रायाः नामानि। अतएव कालिकापुराणमते सत्यङ्गभूतसप्तमहापीठानां नामानि दृश्यन्ते।

रुद्रयामलतन्त्रे दशसङ्ख्यकप्रधानपीठानां नामानि यथा (१) कामरूपः, (२) जालन्धरः, (३) पूर्णगिरिः, (४) उड्डियानः, (५) वाराणसी, (६) ज्वालामुखी, (७) मायावती, (८) मथुरा, (९) अयोध्या, (१०) काञ्ची च। कुब्जिकातन्त्रे द्विचत्वारिंशत् सङ्ख्यकानि पीठानि दृश्यन्ते। ज्ञानार्णवतन्त्रे पीठसङ्ख्या पञ्चाशत् वर्तते।

तन्त्रचूडामणिग्रन्थे एकपञ्चाशत् पीठानि दृश्यन्ते। विष्णुचक्रेण छायासत्या-देहलता, खण्डिता सती एकपञ्चाशद्भागाः सन्तो निपतिताः। कस्मिन् स्थाने देव्याः कस्याङ्गस्य पातोऽभवत्, तत्तत्-स्थानाधिष्ठातृदेव्या किं नाम, तदीयभैरवश्च किंनामधेयोऽभवदित्यादि सविशेषं वर्ण्यते। एवं तन्मतमेव सामान्येन प्रचलितमस्ति। ''शिवचरित'' ग्रन्थे नानाग्रन्थावलम्बनेन सर्वसाकल्येन सप्तसप्तति-पीठस्थानानि वर्णितानि, तन्मध्ये एकपञ्चाशन्महापीठानि, षड्विंशत्युपपीठान्युक्तानीति। योगिनी-तन्त्रेऽपि पीठशक्तिभैरवानां च नामान्युक्तानि—

**यत्र यत्र महादेव्या अङ्गप्रत्यङ्गपातनम्।**
**महाविष्णुश्चक्रपाणिश्चकार धरणीतले॥**
**तत्र तत्र जगद्धात्री ब्रह्मज्योतिः स्वरूपिणी।**
**पाषाणरूपमास्थाय भक्तानां मुक्तिहेतवे॥**

**साधकानाञ्च हितार्थं नित्यं विहरति क्षितौ।**
**तत्रैव भैरवः शम्भुः नानारूपधरः स्थितः॥**
**रक्षार्थं साधकानाञ्च हिताय जगतामपि।**
**उपासते स्वयं देवीं करुणानिधिरीश्वरः॥**

महाविष्णुश्चक्रपाणिः सुदर्शनचक्रेण पृथिव्यां यत्र यत्र छाया-सतीदेव्या अङ्गप्रत्यङ्गपातमकरोत्। तत्र तत्र ब्रह्मज्योतिःस्वरूपिणी जगद्धात्री देवी भक्तानां मुक्तिहेतवे, तथा साधकानां मन्त्रसिद्ध्यर्थं प्रस्तरमयी भूत्वा महापीठरूपेण च नित्यं विराजिता आस्ते। शम्भुश्च तत्र तत्र महापीठे नानारूपभैरवमूर्तिधारणेनावस्थितः। करुणानिधिर्महादेवः साधकानां रक्षार्थमेव जगन्मङ्गलाय च तत्तत्स्थाने स्वयं देवीमुपासते।

## एकपञ्चाशत्पीठरहस्यम्

तन्त्रचूडामणिग्रन्थान्तर्गतमहापीठनिर्णयप्रकरणे एकपञ्चाशन्महापीठानामेता-दृग्विवरणमस्ति; तथाहि—ईश्वर उवाच—

**मातः परात्परे देवि सर्वज्ञानस्वरूपिणी।**
**कथ्यतां मे सर्वपीठ-शक्ति-भैरवदेवताः॥**

ईश्वर-महादेवोऽवदत्-हे मातः। त्वं सर्वश्रेष्ठपदार्थेष्वपि श्रेष्ठा असि। हे देवि—त्वं सर्वज्ञानमयी, हे जगदीश्वरि! त्वं मह्यं सर्वपीठानि, तदधिष्ठातृशक्तयस्तथा अधिष्ठातृ-भैरवनामानि च कथय।

देव्युवाच—

**शृणु वत्स प्रवक्ष्यामि दयालो भक्तवत्सल।**
**याभिर्विना न सिद्ध्यन्ति जप-साधनसत्क्रियाः॥**
**पञ्चाशदेकपीठानि एवं भैरवदेवताः।**
**अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च॥**
**ममाद्य वपुषो देव हिताय त्वयि कथ्यते॥**

देव्युवाच, हे भक्तवत्सल दयामय वत्स! तुभ्यमेतत् सर्वं कथयामि श्रूयताम्। ताभिः शक्त्यादिभिर्विना जपसाधना सत्क्रियाश्च न सिद्ध्यन्ति। विष्णुचक्रेण छेदनात् छायासतीशरीरस्याङ्गप्रत्यङ्गपातेन, एकपञ्चाशत्पीठानामुत्पत्तिरभूत्, तेषां नामानि प्रत्येकपीठाधिष्ठातृभैरवनामानि तत्तत्पीठाधिष्ठातृदेवीनामानि च जगतां हिताय तव समीपे कथयामि। तन्त्रशास्त्रे पीठाधिष्ठात्री देवी ''विद्या'' इति कथ्यते। एकपञ्चाशत्-पीठेषु जगज्जननी एकपञ्चाशद् ''विद्या'' रूपेण विराजिता।

पौराणिकी सिद्धशक्तिपीठानां महत्त्वं जीवानां कृते ईदृशं भवति यथा शरीरे प्राणवायुः।

**प्रथमं कौशिकी शाल्मलीमध्ये पुण्यः कषायपर्वतः॥**

(स्कन्दपुराणे, मानसखण्डे, ५२/३/१२)

अत्र अधुना अल्मोडाक्षेत्रे कौशिकीनामा पीठस्थानमस्ति। द्वितीयं यत्र आबू स्थानमस्ति तत्र अर्बुदादेवीमन्दिरमस्ति सा द्वितीयं पीठस्थानम्। गणेशजननी दुर्गा-राधा-लक्ष्मी-सरस्वती-सावित्री-सृष्टिविधौ प्रकृतिः पञ्चधा आविर्बभूव, सा केन का वा सा ज्ञानिनां वर, किं वा तल्लक्षणं स्थानं, सर्वेषां चरित्रं पूजाविधानं गुण ईप्सितः, तेषां अवतारः कदा बभूवुः, कस्यास्तस्मै विस्तृतं व्याख्यातुं नार्हसि।

## प्रधानशक्तिपीठानां परिचयः

**विष्णुचक्रेषु संच्छिन्नास्तद्देहावयवाः पृथक्।**
**निपेतुः पृथिवीपृष्ठे स्थाने स्थाने महामुने॥**
**महातीर्थानि तान्येव मुक्तिक्षेत्राणि भूतले।**
**सिद्धपीठा हि ते देशा देवानामपि दुर्लभा॥**
**भूमौ निपतितास्तेषु छायाङ्गावयवाः क्षणात्।**
**जग्मु पाषाणतां सर्वलोकानां हितहेतवे॥**

दक्षप्रजापतेर्यज्ञकुण्डे दग्धीभूताः सतीशरीरावयवाः विष्णुचक्रेण संच्छिन्ना यत्र यत्र निपतितास्तत्र तत्रत्यं स्थानं शक्तिपीठरूपेण परिणतम्। तेषां परिचयः देवीगीता, देवीभागवत, तन्त्रचूड़ामणिग्रन्थे ५२ सिद्धपीठानां शिवचरित्रग्रन्थे एकपञ्चाशत् ५१ श्रीमद्देवीभागवते अष्टोत्तरशत् १०८ सिद्धपीठानां चर्चा, कालिका-पुराणे षड्विंशति उपपीठानां चर्चा विद्यते, तेषां मध्ये अकारक्रमेण वर्णितानां सिद्धपीठानां चर्चा इह प्रस्तूयते।

### ( १ ) कौशिकी

भारतवर्षस्य हृदयभूतस्योत्तरप्रदेशस्य अल्मोड़ाजनपदे कौशिकीशाल्मली-नद्योरन्तराले काषायपर्वतोपरि कौशिकीदेव्याः बहुचर्चितं सिद्धपीठं वर्तते।

### ( २ ) अर्बुदादेवी

एकापञ्चाशद्रूपेण परिगणितेषु शक्तिमहापीठेषु परिगणितेदं स्थानं आबूपर्वतस्य अतीवोन्नते शिखरे शिगगह्वरे चास्ति। तत्र गमनार्थं सोपानस्य सुव्यवस्थितो व्यवस्था वर्तते। गह्वरान्तराले अखण्डप्रदीपस्याहर्निशं व्यवस्था वर्तते। तत्प्रकाशादेव देव्याः दर्शनं भवति। चैत्रपूर्णिमायां अश्विनमासस्य विजयादशमीतिथौ च देव्याः दर्शनस्य अतीव महिमा वर्तते। उक्तावसरे तत्र अतीवजनसम्मर्दो भवति।

### ( ३ ) हरिसिद्धिमाता

मध्यप्रदेशस्य उज्जयिनीनगर्याः महाकालेश्वरात् तथा संस्कृतसंस्कृत्योराधार-भूतस्य विक्रमादित्यस्य महाराजभोजस्य च औदार्यात् तन्त्रागारस्य यत् महत्वं भारतवर्षीयपत्तनेषु विद्यते, तादृशं नान्यस्मात् प्रथितं विद्यते। द्वादशज्योतिर्लिङ्गेषु प्रख्यातस्य महाकालेश्वरस्य समीप एव रुद्रसागर-सरोवरस्य अपरतटे महाराज विक्रमादित्यस्य कुलदेव्याः हरिसिद्धिमातुरतीव प्राक्तनं मन्दिरं वर्तते। सिद्धशक्ति-

पीठस्यास्य अनेके चमत्कारपूर्णाः जनश्रुतयः कर्णगोचरीभवन्ति। अत्र अनेकानुष्ठान-निष्ठसाधकाः समागत्य स्वमनोरथानुरूपमनुष्ठानं विधाय स्वभिलषितामिच्छां पूरयन्ति।

**( ४ ) सप्तमातृका शक्तिपीठम्**

मान्धातापर्वतस्योपत्यकायां ओंकारेश्वरशिवस्य प्रसिद्धं द्वादशज्योतिर्लिङ्गस्यान्यतमं स्थानं विद्यते। शिवमन्दिरस्य सार्द्धैकक्रोशदूरे पूर्वभागे पूततोया नर्मदायास्तटे सप्तमातृकायाः महत्वपूर्णं सिद्धपीठं वर्तते। सातमाता इति नाम्ना प्रसिद्धोऽयं पीठो वस्तुतः सप्तमातृका पीठ इति प्राक्तनेषु आकरग्रन्थेषु परिलक्ष्यते। तेषामभिधानन्तु ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी-वाराही-नारसिंही-ऐन्द्री चास्ति। सिद्धपीठस्य महत्वानुसारं स्थानस्याप्यस्य रामणीयकम् दर्शनार्थिनां हृदयावर्जकं विद्यते।

**( ५ ) महाकाली**

महामाया परांबायाः समुपासकाः यद्यपि भारतीयाः शाक्ताः सर्वत्रैव भारतवर्षे सन्ति। परन्तु बङ्गप्रदेशः शक्तिसमुपासकानां दत्तादरो विद्यते। बङ्गप्रदेशस्य उत भारतवर्षस्य महत्तरेषु नगरेषु कलिकातानगरी अन्यतमं स्थानं गृह्णाति। तस्यैव महानगरस्य भगवत्या भागीरथ्या आदिस्त्रोतसि कालीघट्टेति प्रसिद्धं स्थानं विद्यते। तत्रैव विश्वसाध्याः भगवत्याः काल्याः प्रसिद्धं कालीमन्दिरं विद्यते। अस्य स्थानस्यापि परिगणना सिद्धपीठेषु शक्तिसमुपासकैरङ्गीक्रियते। सम्पूर्णबङ्गप्रदेशस्थाः पुरुषाःनार्यश्च परमाराध्यायैनामाराध्यकृतार्थाः सम्भवन्ति। जगद्विदितस्य सन्तशिरोमणेः श्रीरामकृष्णपरमहंसस्योपरि विशिष्टकालीकृपाकटाक्षप्राप्तेश्चरितकथा नाविदितं समेषां विदुषामिति।

**( ६ ) गुह्येश्वरी**

भारतवर्षस्य संस्कृतेरङ्गभूतस्य नयपालितस्य नेपालराजस्य राजधानीकाठमाण्डूनगरस्य वागमतीनद्याः गुह्येश्वरीघट्टस्थश्रीपशुपतिनाथमन्दिरस्य, नातिदूरे गुह्येश्वरी देव्याः सिद्धपीठं वर्तते। सम्पूर्णनेपालराज्यस्य प्रजा परमा भक्त्या एनां समाराधयन्तीति।

**( ७ ) भगवती कालका**

हिमालयस्योपत्यकायां भारतवर्षस्योत्तरपश्चिमकोणे कालकानामकसिद्धस्थानं विद्यते। अत्रैव भगवत्याः कालकायाः प्राक्तनं सुप्रसिद्धं देवायतनं वर्तते। अत्रैव भगवत्याः शरीरकोशानिःसरणात् कौशिकीदेव्याः प्रादुर्भावो जात इति उपरिनिर्दिष्टम्। तदनन्तरम्—

**तस्यां विनिर्गतायां तु कृष्णाभूत् सापि पार्वती।**
**कालिकेति समाख्याता हिमाचलकृताश्रयाः॥**

अतः श्यामा गौरी एव कालिका देवीति ख्यातनामा।

## (८) काशीस्थसिद्धपीठानां संस्तवः

काश्यां ये शक्तित्रिकोणाः सन्ति तेषां मध्ये महामाया-दुर्गा-महालक्ष्मी-महासरस्वती (वागीश्वरी) देव्याश्चर्चा चर्चिता विद्यते। त्रयाणां शक्तिपीठानां पार्श्वतः एकैककुण्डस्य स्थिता काशीखण्डोक्ता शक्तयः विद्यन्ते।

तत्र दुर्गाकुण्डस्य लक्ष्मीकुण्डस्य च स्थितिस्तु इदानीमपि दृश्यते, परन्तु वागीश्वरी कुण्डस्य समासिर्जाता। त्रयाणामपि शक्तिपीठानां पार्श्वतः क्रमेण भदैनी, रामापुरा, जैतपुरा इति काशीस्थखण्डस्य नामकरणं जातम्। शक्तिपीठत्रयातिरिक्तं काश्यां पार्थक्येन नवदुर्गामन्दिरं (शैलपुत्री, ब्रह्मचारिणी, चन्द्रघण्टा, कुष्माण्डा, स्कन्दमाता, कात्यायनी, कालरात्रि, महागौरी, सिद्धिदात्री) विद्यते। यत्र नवरात्रिषु दिनक्रमेण दर्शनोत्सवं भवति। कुष्माण्डा तथा स्कन्दमाता, पूर्वोक्ता भगवती दुर्गाकुण्डस्थिता, दुर्गा एवं वागीश्वरीदेवी एव गृहीता सन्ति। महागौरीपदेन काश्या अधिष्ठात्री भगवती अन्नपूर्णा एव विद्यते। अत अतिरिक्तं चौसट्टी-काली-विशालाक्षी-वाराही-त्रिपुरामङ्गलागौरी-संकटा-पीताम्बराप्रभृतयः सिद्धपीठाः वाराणस्यां सन्ति। यत्राराधकाः स्वकीयामाराधनां विधाय विविधामभिलाषां लब्ध्वा दैवीगुणैः सम्पन्नाः भवन्ति।

## (९) विद्येश्वरी पीठम्

पाञ्चालप्रदेशस्य पठानकोटनगरास्यान्तिके कांगड़ा इत्याख्यमेकं नगरमस्ति। अत्रैव भगवती विन्ध्येश्वर्याप्राक् कालिकं मन्दिरं विद्यते। देव्याः प्राक्तनं मन्दिरं खीस्ताब्दे १९०५ ईशवीये भूचालनेन ध्वस्तम्। इदानीं काचित् धार्मिकसंस्थया अस्य पुनर्निमाणो कृतः। स्थानमिदं शक्तिपीठेष्वन्यतमं विद्यते। अत्र भगवत्या सतीदेव्या मुण्डस्य पतनं जातम्। मूर्तिरपि मुण्डमयी विद्यते। अत्र भगवत्याः सम्मुखस्थ एव रोप्यमण्डिते स्थाने प्रसिद्धवाग्यन्त्रस्योल्लेखो वर्तते।

देव्याः मन्दिरस्य प्राङ्गणे एकस्य कुण्डस्य स्थितिः, यस्य पार्श्वे विविधा यूपस्तम्भाः संस्थापितानि सन्ति।

## (१०) महालक्ष्मीपीठम्

महाराष्ट्रप्रदेशस्य कोल्हापुरस्थानं देवीभागवते-मत्स्यपुराणे च महालक्ष्म्याः स्थानत्वेन निर्दिष्टमस्ति। स्थानमिदं शक्तिसिद्धपीठेष्वन्यतमं महाराष्ट्र-प्रदेशस्य च प्रभुत्वं शक्तिपीठरूपेण स्वीकुर्वन्ति। अत्र प्रत्यहं लक्षतो ह्यधिका दर्शनार्थिनो समागत्य भगवत्या महालक्ष्म्याः दर्शनेन सफलकामा कृतार्थाश्च भवन्ति।

## (११) गन्धर्वलस्याक्षीरभवानीपीठम्

भारतवर्षस्य स्वर्गतुल्यरमणीयस्य कश्मीरप्रदेशस्य राजधानीश्रीनगरस्य ८ क्रोशपरिमितं उत्तरभागे, भवान्याः योगमायायाः क्षीरभवानीति ख्यातं सिद्धपीठं

वर्तते। मन्दिरस्य परितः जलं वर्तते; तन्मध्य एव मन्दिरस्य स्थितिः। ज्येष्ठे शुक्लपक्षे अष्टम्यां तत्र महोत्सवं भवति। मन्दिरस्य परितः कुण्डस्थजलं समये-समये परिवर्तितं भवति, येन शुभस्य अशुभस्य च तत्रस्थैः बुधैराकलनं कुर्वन्ति।

### (१२) अम्बादेव्याः पीठम्

काठियावाडप्रान्तस्य सुप्रसिद्धम् अम्बादेव्या मन्दिरं जूनागढ़राज्यस्य गिरिनार-पर्वतस्योपरि विद्यते। पर्वतारोहणमतीव दुष्करं, तत्र निर्मितेन सोपानमार्गेण प्रायः षष्टिसहस्रसोपानमतिक्रम्य पर्वतस्य शिखरत्रयाणां यात्रा पूर्यते। चतुःपञ्चसोपाना-नामन्तरा विस्तृतस्य सोपानस्य निर्माणं विद्यते, यस्योपरि यात्रिणः विश्रम्य अग्रे उपरि च गच्छन्ति। पर्वतस्यास्य त्रिषु शिखरेषु क्रमेण अम्बादेव्या, गोरक्षनाथस्य, दत्तात्रयस्य च स्थानं विद्यते। अम्बादेव्या विशालाकारा मूर्तिः भयानकेऽस्मिन् वन्य-प्रदेशे अतीव उग्रा प्रतीयते। अरण्येऽस्मिन् सिंहाः सन्ति। अस्मिन्नेव पर्वतस्य एकस्मिन् गह्वरे कालीदेव्याया अपि प्रतिमा विद्यते, यत्र अनेके उपासका उपासनायां दत्तचित्ताः दृश्यन्ते।

### (१३) कामाख्या सिद्धपीठम्

असमप्रदेशस्य गौहाटीनगरस्य क्रोशमात्रपरिमिते पश्चिमभागे नीलगिरि अथवा नीलकूटपर्वतस्य उपरि प्रधानं सिद्धपीठं वर्तते। अस्यैव भगवती कामाख्या पीठम् इति नाम्ना व्यपदिश्यते। कालिकापुराणानुसारेण अस्मिन् स्थाने सतीदेव्या योनिस्थानस्य पतनं जातं; अतः अत्रत्यं प्रधानतीर्थं एकस्मिन् अन्धकारपूर्णगह्वरमध्ये स्थितं योनिपीठं वर्तते। अस्मिन् स्थाने केवलकुण्डमात्रमेव विद्यते। यत्तु पुष्पेण आच्छादितं वर्तते। समीप एव एकस्मिन् मन्दिरे भगवत्या प्रतिमा अपि वर्तते। पीठोऽयं महाक्षेत्रपदेन व्यपदिश्यते। एतादृशं भगवत्या पीठं विन्ध्यवासिनीक्षेत्रे तथा ज्वालामुखी एव वर्तते। अस्मात् स्थानात् अष्टक्रोशपरिमितं सुप्रसिद्धं कामरूपनामकं स्थानं विद्यते। अत्रत्य-स्थितानां नारीणां विषये विविधा ऐन्द्रजालिका जनश्रुतयः श्रूयन्ते।

### (१४) चटगांवस्थचटग्रामे सीताकुण्डस्य भगवती भवान्या पीठम्

चटग्रामस्थ चटग्रामनगरात् द्वादशक्रोशदूरस्थं सीताकुण्डनामकं तीर्थस्थानं विद्यते। तत्पार्श्व एव चन्द्रशेखरपर्वतस्य शिखरोपरि भगवती भवान्या सुप्रसिद्धं सिद्धं च मन्दिरं विद्यते। यस्य गणना एकपञ्चाशत् संख्याकपरिगणितेषु शक्तिपीठेषु वर्तते। अस्मिन् स्थाने वाडवकुण्डे अहर्निशं अग्निर्निःसरति तथा तत्पार्श्व एव प्रस्तरतोऽपि बह्निः निःसरति।

### (१५) चित्तौड़स्थ भगवती कालिकायाः पीठम्

राजस्थानप्रदेशे चित्तौड़ इति सर्वजनसुविदितमैतिहासिकं दुर्गं विद्यते अस्मिन्नेव दुर्गे भगवती कालिकायाः प्राक्तनं सिद्धपीठं वर्तते। एतत् नाम श्मशानकालीति यद्यपि व्यपदिश्यते तथापि न काचिद्हानिं, यतोहि अस्य दुर्गस्य रक्षायां स्व-

प्रतिष्ठासंरक्षणे च राजपूतवीराङ्गना अग्नौ स्वशरीरं दग्धा कृताः। मन्दिरेऽस्मिन् अहर्निशं अखण्डदीपः प्रज्वलति। अत्र प्रतिस्तम्भोपरि अपरिमिताः प्रतिमा विराजन्ते। अस्मिन् दुर्गे तुलया भवानी तथा अन्नपूर्णायाः अपि मन्दिरं विद्यते।

### ( १६ ) चिन्तापूर्णाः

जालन्धरनगरात् ज्वालामुखीमार्गे होशियारपुरतः १५ पञ्चदशक्रोशदूरे भगवती चिन्तापूर्णायाः सिद्धपीठं सघने पर्वतीयप्रदेशे स्थितोऽस्ति। सुप्रसिद्धकांगड़ोपत्यकायां यानि शक्तित्रिकोणानि सन्ति, तस्य प्रतिशिखरे क्रमशः चिन्तापूर्णा-ज्वालामुखी-कांगड़स्था विन्ध्येश्वरी विराजिताः सन्ति। त्रयोऽपि पीठाः सिद्धशक्तिपीठस्वरूपेण समाराधकाः स्वीकुर्वन्ति।

### ( १७ ) चुनारस्थ भगवती दुर्गा

वाराणसीनिकटस्थ एव विन्ध्यपर्वतस्य उपत्यकायां स्थितः चुनार इति प्रसिद्धं स्थानं विद्यते। तदन्तिक एव विन्ध्यपर्वतस्य एकस्यां कन्दरायां भगवत्या दुर्गायाः सुरम्यस्थानं विद्यते। मन्दिरस्य प्रवेशमार्गं गवाक्षरूपेण सङ्कीर्णं विद्यते। तत्रैव उषित्वा देव्याः सदने प्रवेशो भवति। दुर्गामातुः प्रतिमा अतीव श्रद्धोत्पादिका वर्तते। सिद्धपीठोऽयं देव्याः समाराधनाय सिद्धस्थानं वर्तते।

### ( १८ ) जनकनन्दिनी जन्मस्थानम्

जनकपुररोडरेलवेस्थानागमनानन्तरम् इदानीं नेपालराज्यान्तर्गते अस्मिन् स्थाने गमनं भवति। अत्रैव जगज्जनन्याः सीतायाः प्रादुर्भावो जातः। अतः सिद्धपीठ-त्वेनेदं स्थानमङ्गीक्रियते विद्वद्भिः।

### ( १९ ) जाबालिपुरम्

जाबालिपुरतः षट्क्रोशपरिमितं पूततोयानर्मदायाः प्रपातविशेषः भेड़ाघट्टस्थः विद्यते। नर्मदायाः स्फटिकशिलोपरि गौरीशङ्करदेवालयस्य मध्ये चतुःषष्टियोगिनीनां स्थानं विद्यते। प्रतिमायां निर्मितः तन्त्रोक्तविद्याः जातस्तथा सर्वा प्रतिमा मनुष्याकारेण संस्थापिताः सन्ति। अतीव कष्टस्यायं विषयः यत् प्रतिमाप्रतिभञ्जकैर्यवनाततायिभिः तेषां चोत्पाटनं कृतमिति।

### ( २० ) ज्वालामुखी

देव्याः प्रसिद्धसिद्धपीठोऽयम् आराधकानां सर्वथा आवर्जकं विद्यते। अत्रत्या विशेषता यदहर्निशम् अनादिकालतः भूगर्भात् वह्निज्वाला निःसरति।

### ( २१ ) जालन्धरः

आकरेषु शक्तिसिद्धपीठानां वर्णने अस्य स्थानविशेषस्यापि चर्चा विद्यते। परन्तु नगरेऽस्मिन् कस्यापि शक्तिपीठस्य तादृशं स्थानं नोपलभ्यते। अनुमीयते यत्

प्राचीनजालन्धरतः त्रिगतप्रदेशे ( वर्तमान कांगड़े की घाटी ) चिन्तापूर्णा, ज्वालामुखी, नगरकोटिदेवी, स्थानतः यत् शक्तित्रिकोणं तदेवास्य सिद्धपीठपरिगणनायां करणम्।

### ( २२ ) पद्मावत्या सिद्धशक्तिपीठम्

तिरुपति बालाजीति नाम्ना प्रसिद्धं तीर्थस्थानं दक्षिणभारतस्य महाक्षेत्रं विद्यते। तत्रतः सार्धक्रोशदूरं चिन्तानूर इति स्थाने पद्मावत्याः सिद्धशक्तिपीठं वर्तते, यस्य माहात्म्यमतुलं लोकोत्तरं च वर्तते।

### ( २३ ) द्वारका

भारतवर्षे जगन्नाथपुरी-श्वेतवानरामेश्वर-बद्रिकाश्रम इति प्रथितेषु चतुर्धामसु द्वारकाधामे श्रीरुक्मणीदेव्यास्तथा सत्यभामायाः देवसदनं विद्यते। यस्य माहात्म्यं लोकोत्तरं विद्यते।

### ( २४ ) देवीपाटनीयं पटेश्वरीपीठम्

एतादृशी जनश्रुतिः श्रूयते यत् महाभारतकाले महारथीकर्णद्वारा पटेश्वरी देव्याः संस्थापनमभूत्। देवीद्विजप्रियः सम्राट् विक्रमादित्यः तीर्थोद्धारावसरे अत्र द्वितीयं देवीमन्दिरं निर्मितम्। कालान्तरे नाथसम्प्रदायस्य छिद्रितकर्णयोगिनामधिकारो मन्दिरोपरि जातः। ततः अद्याप्यत्र तेषामेव संरक्षणं प्रचलति। पटेश्वरीदेव्याः मन्दिरं एकस्य उन्नतभूभागोपरि स्थितं विद्यते, तत् समीप एव जलपूर्णं कुण्डमप्यस्ति, अत्र वसन्तनवरात्रिषु अतीव महोत्सवं भवति।

### ( २५ ) योगमाया तथा कालिकापीठम्

भारतवर्षस्य प्राचीनकालीना तथा आधुनिककालीना इन्द्रप्रस्थ (देहली) इति कथितस्य महानगरस्य मध्ये द्वौ शक्तिपीठौ स्तः। कुतुबमीनारस्य पार्श्वे योगमायाया मन्दिरं, तत्रस्था योगमाया पृथ्वीराजस्य ईष्टदेवी आसीत्। मन्दिरस्य मध्ये काचित् प्रतिमा नास्ति, अपितु कामाख्यापीठवत् भगवती योनिरूपा एव विराजमाना सन्ति। द्वितीयं स्थानं अस्मात् स्थानात् क्रोशत्रयात्मकं ओखला नामके ग्रामे एकस्मिन् उन्नते भूभागे कालिकायाः मन्दिरमस्ति।

### ( २६ ) नागपुरः

मध्यभारतस्य महानगरेऽस्मिन् सहस्रचण्ड्या तथा रुक्मिणीदेव्याः द्वौ प्रसिद्ध-मन्दिरौ स्तः। यत्र दर्शनार्थं सम्पूर्णभारतवर्षस्य विशेषतः मध्यप्रदेशीयाः जनाः अधिकाधिकसङ्ख्यकाः समागच्छन्ति।

### ( २७ ) नैनादेव्याः मन्दिरम्

नैनीतालः संयुक्तप्रान्तीयपर्वतीयनगरेषु अतीव मनोरमं स्थानं विद्यते। अत्र पर्वतोपरि अतीव अगाधमेकं ऋषिसरोवरं विद्यते। अयमेव सरोवरः 'मल्लीलाल' इति ख्यातः, तस्योपरि प्राक्तनम् नैनादेव्याः मन्दिरमस्ति। १८८० ख्रीस्ताब्दे

पर्वतपतनात् प्राचीनमन्दिरं विध्वस्तम्। वर्तमानं मन्दिरन्तु पञ्चाशवर्षप्राक्तनं अस्ति। कूर्माचलप्रदेशे भगवती नैनादेव्या अतीव महत्वम् एनामेव लक्ष्यीकृत्य तस्य स्थानस्य नैनीताल इति व्यपदेशं जातम्।

### ( २८ ) पठानकोट

अयम् पठान शब्दः यवनजात्या सम्बद्धो नास्ति। अपितु अस्य शुद्धं स्वरूपं पथ इति। यतोहि अस्मिन्नगरे प्राचीनकालतः सुदीर्घराजपथाः सम्मिलन्ति। अत्र प्राक्तनहिन्दुनृपाणां समकालीनं दुर्गं ध्वन्सावशेषेण विद्यमानं अस्ति। अस्मिन्नेव दुर्गे अतीवप्राचीनदेव्याः स्थानं अस्ति। त्रिगतं पर्वतीयप्रदेशस्य द्वारोपरि स्थितं पठानकोटस्थ देव्या आराधनार्थं अनन्तकालतः आराधकाः समागच्छन्ति।

### ( २९ ) पण्ढरपुर

महाराष्ट्रदेशस्य पण्ढरपुरं अतीव महत्त्वशाली क्षेत्रं विद्यते। अत्रैव श्रीबिठोबा मन्दिरस्य प्रान्तप्रदेशे श्रीकृष्णप्रिया रुक्मिणी, सत्यभामा, महालक्ष्मी तथा राधिका पृथक् पृथक् स्व-स्वमन्दिरेषु शोभायमानाः सन्ति। यासां महत्वं महाराष्ट्रप्रदेशे सुविदितमेव।

### ( ३० ) प्रयागस्थ चण्डिका

प्रयागजनपदस्य कड़ानामके स्थाने चतुश्शतवर्षपूर्वं बाबामलूकदासेति प्रथितः सन्तो अभूत्। मलूकदासःचण्डिकादेव्याः अनन्योपासकः आसीत्। तत्रैव चण्डिका-देव्याः सिद्धं शक्तिपीठं विद्यते, यत्र खत्रिजातीयाः जनाः स्व-स्व-बालकानां चूडाकरणसंस्कारार्थं दर्शनार्थं च समागच्छन्ति।

### ( ३१ ) पूर्णनगरस्य पार्वतीपीठम्

अत्रत्यं सुप्रसिद्धपार्वतीमन्दिरं समस्तेषु महाराष्ट्रप्रदेशेषु मान्यः। अस्य पर्वतो-परिस्थितः मन्दिरस्य शोभना शिल्पकला दर्शकानां हृदयं नयनञ्च आवर्जयति। अस्मिन्नेव जनपदे प्रतापगढ़ नामकस्थाने छत्रपतिमहाराजशिवराज्ञः इष्टदेवी भगवत्याः भवान्याः प्राचीनं मन्दिरं अस्ति।

### ( ३२ ) गूर्णगिरिः

अल्मोडाजनपदान्तरं पीलीभीतप्रखण्डे तनकपुरनामकं स्थानं विद्यते। तत्पार्श्व एव शारदानद्यास्तटे नेपालराजस्य समीप एव कालिकादेव्याः सिद्धपीठं विद्यते। तत्रत्यः अतिशैलः अतीव शोभनः। मार्गे वंशादिवृक्षाणां समष्टि अतीव शोभना विद्यते। पर्वतोपरि कालिकामन्दिरातिरिक्तं अनेकानि अन्यानि मन्दिराणि अपि सन्ति। अतीवोन्नतशिखरे भगवतीकालिकायाः मुख्यस्थानं अस्ति। प्राक्तनं पीठं सर्वथा आच्छादितं विद्यते।

### ( ३३ ) फर्रुखाबाद

अस्मिन्नेव जनपदे तिरवा नामकस्थाने श्रीयन्त्रस्योपरि निर्मिता महात्रिपुर-सुन्दर्याः प्रतिमा विद्यते। जनसामान्यस्तु एनां अन्नपूर्णा मन्दिरमिति उद्घोपयन्ति।

**( ३४ ) माहेश्वरीदेव्याः पीठम्**

बांदाजनपदे माहेश्वरीदेव्या अतीव प्राक्तनं मन्दिरं अस्ति। सिद्धेऽस्मिन् स्थाने अनेके देव्युपासकाः उपासनां कुर्वन्ति। अस्यैव पार्श्वे वामदेवेश्वरपर्वतोपरि अपूर्वं वामदेवशिवलिङ्गं अस्ति। तदाधारीकृत्यैव अस्य जनपदस्य बांदा इत्यभिधानं जातम्।

**( ३५ ) भुवनेश्वरः**

अस्य स्थानस्य प्राक्तनमभिधानं एकाग्रकाननं काननमस्ति। इदं क्षेत्रमपि एकपञ्चाशत् शक्तिपीठेषु परिगणितं अस्ति। अत्र देवीपादहरसरोवरस्य तटोपरि पार्थक्येन अष्टोत्तरशतमन्दिराणि सन्ति।

**( ३६ ) मथुरा**

अस्मिन् स्थाने प्रधानशक्तिपीठत्वेन महाविद्या अपि च बरसानेस्थित मन्दिराणि सन्ति। महाविद्याया स्थानं मथुरायामेवास्ति। एकस्मिन् उन्नते भूभागोपरि महाविद्यायाः प्राक्तनं मन्दिरं विद्यते। अत्रस्थिता भगवत्याः प्रतिमा अतीव विस्तृता अस्ति। वरसाने-स्थितैकस्मिन् दुर्गसदृशमन्दिरे श्रीराधिकायाः प्राक्तनं सिद्धपीठस्थलं विद्यते।

**( ३७ ) मीनाक्षी ( मदुरा )**

अत्र (मदुरायां) एकादशतलनिर्मितं मीनाक्षीदेव्याः अतीव प्रतिष्ठितं सिद्धपीठं अस्ति। दक्षिणभारते यादृशी प्रतिष्ठा प्रत्यक्षा सिद्धिश्च अस्य मन्दिरस्यास्ति तादृशी नान्यस्य शक्तिपीठस्य। अस्य मन्दिरस्य द्वारोपरि अष्टलक्ष्मीनामप्रतिमा विन्यस्ता अस्ति। प्रतिस्तम्भोपरि एकैकाः प्रतिमा तथा एतेषां स्तम्भानां उपरि एव मन्दिर-भारमवलम्बितमस्ति। भारतीयाः शक्तिसमुपासकाः मीनाक्षीदेवीं अत्यादरेण प्रत्यहं स्मरन्ति प्रणमन्ति च।

**( ३८ ) मद्रासस्थ कुडिकामन्दिरम्**

अस्य नगरस्य साहूकारपेठस्थो सुप्रसिद्धं मातुः कुडिकायाः मन्दिरं विद्यते। मन्दिरस्य समक्षं नायं मिष्ठोदनं निर्माय कुडिकादेव्यै समर्पयन्ति। मद्रासप्रान्तवासिनां शक्तिसमुपासकानामास्था श्रद्धा च सीमारहिते विद्यते। अत्रत्या प्रणतिपरम्पराऽपि अतीव विचित्रा विद्यते। दर्शनार्थिनः देव्याः सम्मुखमागत्य स्वशिरसि मुष्टिप्रहारं कुर्वन्ति, तथा स्वकर्णं गृहीत्वा नृत्यं कुर्वन्ति।

**( ३९ ) महोबा**

प्रसिद्धवीरआल्हा-ऊदलस्य महोबास्था आराध्या देवी प्राक्तन-शक्तिपीठेषु परिगण्यते। अस्या आराधना भक्तानां मनोरथसिद्ध्यर्थं; अपि चेयं पुरुषार्थचतुष्टय-सम्पादिकाऽपि विधते।

**( ४० ) मुम्बादेवी**

कालकादेवी महालक्ष्म्याः, शक्तिपीठम् मुम्बई इति प्रख्यातनगरे प्राधान्येन

मुम्बादेवी-कालकादेवी, महालक्ष्मीति ख्यातानि सिद्धपीठत्रयाणि सन्ति। मुम्बा देव्याः पूजायां जीवबलिमुपयुज्यते। कालकादेव्याः प्रतिमा अतीव प्राचीना विद्यते। महालक्ष्मीमन्दिरं समुद्रतटे अतिशोभनस्थले निर्मितमस्ति। मुम्बादेव्याः पार्श्वे सुविस्तृतं सरोवरमस्ति। एतदतिरिक्तं बाबुलनाथस्योन्नते पर्वते देव्याः प्रतिमा वर्तते तस्य सौन्दर्यं गाम्भीर्यञ्च लोकोत्तरं वर्तते।

## ( ४१ ) मैसूरराज्यस्य चामुण्डापीठम्

मैसूरराज्यस्याधिष्ठात्रीदेवी चामुण्डा विद्यते। यस्याः सुविशालं मन्दिरं मैसूरस्य समीपस्थितस्य पर्वतस्योपरि विद्यते। मार्गमध्ये सुदृढसोपानस्य आरोहणार्थं व्यवस्था वर्तते। मन्दिरस्य समीप एव विशालकायनन्दीशिववाहनस्य प्रतिमा वर्तते। भगवती चामुण्डामत्रत्याः जनाःभेरुण्डा इत्यभिधानेन अभिधास्यन्ति। मैसूरराज्यस्य विख्यातं गण्डभेसण्डा इति प्रतीकं चामुण्डाया एव द्योतकं विद्यते।

## ( ४२ ) मैहरस्थ शारदाशक्तिपीठम्

मध्यप्रदेशस्य अतीवोन्नतपर्वतशिखरोपरि शारदादेव्याः मन्दिरमस्ति। कामरूपविन्ध्यक्षेत्रवत्-अस्य सिद्धपीठस्यापि महत्त्वं विद्यते।

## ( ४३ ) विन्ध्याचलस्थ विन्ध्यवासिनीपीठम्

विन्ध्यवासिन्याः महत्त्वं वैशिष्ट्यञ्च समस्तेषु शक्तिपीठेषु अन्यतमम्। या देवी श्रीकृष्णस्थाने वसुदेवद्वारा कारागारे आनीताऽऽसीत्, सैव कंसकरात् भ्रष्टा आकाशवाण्या सूचिता। सा एव विन्ध्यवासिनी भगवती जाता। इदं तीर्थं महाप्रधानशक्तिपीठेष्वन्यतममस्ति। इयमेव शुम्भनिशुम्भयोर्हन्त्री। क्षेत्रेऽस्मिन् शक्तित्रिकोणमस्ति। प्रथमं विन्ध्यवासिनी (लक्ष्मी), द्वितीयम्-कालीखोहस्थिता काली (महाकाली), तृतीयन्तु पर्वतस्था अष्टभुजा (महासरस्वती) शोभमानाः सन्ति।

## ( ४४ ) शिमला

अस्मिन् प्रदेशेऽपि प्रसिद्धशक्तिपीठं अस्ति। अत्र वायसरायनिवासस्य समीप एव कोटीति प्रसिद्धं देव्याः मन्दिरमस्ति। रेलवेस्टेशनस्य पार्श्व एव तारादेव्याः प्राक्तनं मन्दिरं विद्यते। तत्रैव कण्डाघट्टस्थ एकं प्राक्तनं देव्या आयतनं विद्यते।

## ( ४५ ) श्रीशलैस्थ ब्रह्माराम्बापीठम्

मल्लिकार्जुनद्वादशज्योतिर्लिङ्गस्य स्थितित्वात् अस्य स्थानस्य महिमा लोकोत्तरा विद्यते। अत्र ब्रह्माराम्बा देव्याः सुविख्यातं शक्तिपीठं विद्यते। यस्याधारिकृत्यैव अस्य पर्वतस्य ब्रह्मगिरि इत्यभिधानं जातम्। अत्रत्यं प्राकृतिकं सौष्ठवम्, लोकोत्तरं वर्णनातीतञ्च विद्यते। एकपञ्चाशत् सङ्ख्यकासु शक्तिपीठेषु अस्यापि परिगणना विद्यते।

## ( ४६ ) सांभर

इदं स्थानं लवणोत्पादकत्वात् भारतवर्षे विख्यातमस्ति। लवणनिर्माणस्थलात्

समीप एव देव्याः अतीवप्राचीनमायतनं विद्यते। अत्रत्या जनाः एनां माताजी इत्यभिधानेन निर्दिशन्ति। राजपूतानाप्रदेशे अस्य क्षेत्रस्य अतीव महिमा विद्यते।

**( ४७ ) हरिद्वार**

अस्मिन्नपि पुण्यक्षेत्रे त्रिकोणात्मकं शक्तिपीठं विद्यते। एकस्मिन् प्रकोणे नीलपर्वतस्था भगवती चण्डिदेव्याः मन्दिरम्। द्वितीये च प्रकोणे दक्षेश्वरस्थानस्था पराम्बा पार्वती, तृतीये प्रकोणे बिल्वपर्वतनिवासिनी मनसादेवीति। अत्रत्यं प्राकृतिकं सौन्दर्यं सर्वथा वर्णनातीतं विद्यते।

तन्त्रचूडामणिग्रन्थे एकपञ्चाशत् सिद्धपीठानां चर्चा चर्चिता; तत्तु निम्न-तालिकायां प्रदर्श्यते—

| | स्थान | अङ्ग तथा भूषण | शक्ति |
|---|---|---|---|
| १. | हिङ्गुला | ब्रह्मरन्ध्र | कोट्टवीशा |
| २. | शर्करार | तीन चक्षु | महिषमर्दिनी |
| ३. | सुगन्धा | नासिका | सुनन्दा |
| ४. | काश्मीर | कण्ठदेश | महामाया |
| ५. | ज्वालामुखी | महाजिह्वा | सिद्धिदा |
| ६. | जलन्धर | स्तन | त्रिपुरमालिनी |
| ७. | वैद्यनाथ | हृदय | जयदुर्गा |
| ८. | नेपाल | जानु | महामाया |
| ९. | मानस | दक्षिणहस्त | दाक्षायणी |
| १०. | उत्कले विराजाक्षेत्र | नाभिदेश | विमला |
| ११. | गण्डकी | गण्डस्थल | गण्डकी |
| १२. | बहुला | वामबाहु | बहुलादेवी |
| १३. | उज्जयिनी | कर्पूर | मङ्गलचण्डिका |
| १४. | त्रिपुरा | दक्षिण पाद | त्रिपुरसुन्दरी |
| १५. | चहल | दक्षिण बाहु | भवानी |
| १६. | त्रिस्रोता | वामपाद | भ्रामरी |
| १७. | कामगिरि | योनिदेश | कामाख्या |
| १८. | प्रयाग | हस्ताङ्गुलि | ललिता |
| १९. | जयन्ती | वामजङ्घा | जयन्ती |
| २०. | युगांधा | दक्षिणाङ्गुष्ठ | भूतधात्री |
| २१. | कालीपीठ | दक्षिण पादाङ्गुलि | कालिका |
| २२. | किरीट | किरीट | विमला |
| २३. | वाराणसी | कर्णकुण्डल | विशालाक्षी-मणिकर्णिका |

| | | | |
|---|---|---|---|
| २४. | कन्याश्रम | प्रष्ठ | सर्वाणि. |
| २५. | कुरुक्षेत्र | गुल्फ | सावित्री |
| २६. | मणिबन्ध | दो मणिबन्ध | गायत्री |
| २७. | श्रीशैल | ग्रीवा | महालक्ष्मी |
| २८. | कांची | अस्थि | देवगर्भा |
| २९. | कालमाधव | नितम्ब | काली |
| ३०. | शोणदेश | नितम्बक | नर्मदा. |
| ३१. | रामगिरि | अन्य स्तन | शिवानी |
| ३२. | वृन्दावन | केशपाश | उमा |
| ३३. | शुचि | ऊर्ध्वदन्त | नारायणी |
| ३४. | पञ्चसागर | अधोदन्त | वाराही |
| ३५. | करतोया तट | तल्प | अपर्णा |
| ३६. | श्रीपर्वत | दक्षिण गुल्फ | श्रीसुन्दरी |
| ३७. | विभाष | वाम गुल्फ | कपालिनी |
| ३८. | प्रभास | उदर | चन्द्रभागा |
| ३९. | भैरवपर्वत | ऊर्ध्व ओष्ठ | अवन्ती |
| ४०. | जनस्थल | दोनों चिबुक | भ्रामरी |
| ४१. | सर्वशैल | वामगण्ड | शाकिनी |
| ४२. | गोदावरीतटे | दक्षिण गण्ड | विश्वेशी |
| ४३. | रत्नावली | दक्षिण स्कन्ध | कुमारी |
| ४४. | मिथिला | वाम स्कन्ध | उमा |
| ४५. | नलहाटी | नला | कालिकादेवी |
| ४६. | कर्नाटक | कर्ण | जयदुर्गा |
| ४७. | वक्रेश्वर | मनः | महिषमर्दिनी |
| ४८. | यशोर | पाणिपद्म | यशोरेश्वरी |
| ४९. | अट्टहास | ओष्ठ | फुल्लरा |
| ५०. | नन्दिपुर | कण्ठहार | नन्दिनी |
| ५१. | लङ्का | नूपुर | इन्द्राक्षी |
| ५२. | विराट | पादाङ्गुलि | अम्बिका |
| ५३. | मगध | दक्षिण जङ्घा | सर्वानन्दकरी |

देवीभागवते अष्टोत्तरशतपीठानां परिगणना विद्यते। देवीभागवते महर्षि-वेदव्यासः जनमेजयप्रश्नानुगतं पीठस्थानं तथा तत्रत्या अधिदेवतायाः अभिधानञ्च निर्दिष्टं, तत्तु निम्नप्रकारेण वर्तते—

| | स्थान | देवता |
|---|---|---|
| १. | वाराणसी | विशालाक्षी |
| २. | नैमिषारण्य | लिङ्गधारिणी |
| ३. | प्रयाग | ललिता |
| ४. | गन्धमादन | कामुकी |
| ५. | दक्षिणमानस | कुमुदा |
| ६. | उत्तरमानस | विश्वकामा |
| ७. | गोमन्त | गोमती |
| ८. | मन्दर | कामचारिणी |
| ९. | चैत्ररथ | मदोत्कटा |
| १०. | हस्तिनापुर | जयन्ती |
| ११. | कान्यकुब्ज | गौरी |
| १२. | मलय | रम्भा |
| १३. | एकाग्र | कीर्तिमती |
| १४. | विश्व | विश्वेश्वरी |
| १५. | पुष्कर | पुरुहूता |
| १६. | केदार | सन्मार्गदायिनी |
| १७. | हिमवतप्रष्ठ | मन्दा |
| १८. | गोकर्ण | भद्रकर्णिका |
| १९. | स्थानेश्वर | भवानी |
| २०. | बिल्वक | बिल्वपत्रिका |
| २१. | श्रीशैल | माधवी |
| २२. | वरभद्रेश्वर | भद्रा |
| २३. | वराहशैल | जया |
| २४. | कमलालय | कमला |
| २५. | रुद्रकोटि | रुद्राणी |
| २६. | कालन्जर | काली |
| २७. | शालग्राम | महादेवी |
| २८. | शिवलिङ्ग | जलप्रिया |
| २९. | महालिङ्ग | कपिला |
| ३०. | माकोट | मुकुटेश्वरी |
| ३१. | मायापुरी | कुमारी |
| ३२. | सन्तान | ललिताम्बिका |

| | | |
|---|---|---|
| ३३. | गया | मङ्गला |
| ३४. | पुरुषोत्तम | विमला |
| ३५. | सहस्राक्ष | उत्पलाक्षी |
| ३६. | हिरण्याक्ष | महोत्पला |
| ३७. | विपाशा | अमोघाक्षी |
| ३८. | पुण्ड्रवर्धन | पाटला |
| ३९. | सुपार्श्व | नारायणी |
| ४०. | त्रिकटु | रुद्रसुन्दरी |
| ४१. | विपुल | विपुला |
| ४२. | मलयाचल | कल्याणी |
| ४३. | सह्याद्रि | एकवीरा |
| ४४. | हरिश्चन्द्र | चन्द्रिका |
| ४५. | रामतीर्थ | रमणी |
| ४६. | यमुना | मृगावती |
| ४७. | कोटितीर्थ | कोटवी |
| ४८. | मधुवन | सुगन्धा |
| ४९. | गोदावरी | त्रिसन्ध्या |
| ५०. | गङ्गाद्वार | रतिप्रिया |
| ५१. | शिवकुण्ड | शुभानन्दा |
| ५२. | देविका तट | नन्दिनी |
| ५३. | द्वारावती | रुक्मिणी |
| ५४. | वृन्दावन | राधा |
| ५५. | मथुरा | देवकी |
| ५६. | पाताल | परमेश्वरी |
| ५७. | चित्रकूट | सीता |
| ५८. | विन्ध्य | विन्ध्यवासिनी |
| ५९. | करवीर | महालक्ष्मी |
| ६०. | विनायक | उमादेवी |
| ६१. | वैद्यनाथ | आरोग्या |
| ६२. | महाकाल | महेश्वरी |
| ६३. | उष्णतीर्थ | अभया |
| ६४. | विन्ध्यपर्वत | नितम्बा |
| ६५. | माण्डव्य | माण्डवी |

| | | |
|---|---|---|
| ६६. | माहेश्वरीपुर | स्वाहा |
| ६७. | छगलण्ड | प्रचण्डा |
| ६८. | अमरकण्टक | चण्डिका |
| ६९. | सोमेश्वर | वरारोहा |
| ७०. | प्रभास | पुष्करावती |
| ७१. | सरस्वती | देवमाता |
| ७२. | तट | पारावारा |
| ७३. | महालय | महाभागा |
| ७४. | पयोष्णी | पिङ्गलेश्वरी |
| ७५. | कृतशौच | सिंहिका |
| ७६. | कार्तिक | अतिशाङ्करी |
| ७७. | उत्पलावर्तक | लीला (लोला) |
| ७८. | सोनसङ्गम | सुभद्रा |
| ७९. | सिद्धवन | लक्ष्मी |
| ८०. | भारताश्रय | अनङ्गा |
| ८१. | जालन्धर | विश्वमुखी |
| ८२. | किष्किन्धापर्वत | तारा |
| ८३. | देवदारुवन | पुष्टि |
| ८४. | काश्मीरमण्डल | मेघा |
| ८५. | हिमाद्रि | तुष्टि |
| ८६. | विश्वेश्वर | भीमादेवी |
| ८७. | शङ्खोद्धार | धरा |
| ८८. | पिण्डारक | धृति |
| ८९. | चन्द्रभागा | कला |
| ९०. | अच्छोद | शिवधारिणी |
| ९१. | वेणा | अमृता |
| ९२. | बदरी | उर्वशी |
| ९३. | ऊत्तरकुरु | ओठाही |
| ९४. | कुशद्वीप | कुशोदका |
| ९५. | हेमकूट | मन्मथा |
| ९६. | मुमुद | सत्यवादिनी |
| ९७. | अश्वत्थ | वंदनीया |
| ९८. | कुबेरालय | निधि |

| | | |
|---|---|---|
| ९९. | वेदवदन | गायत्री |
| १००. | शिवसन्निधि | पार्वती |
| १०१. | देवलोक | इन्द्राणी |
| १०२. | ब्रह्मामुख | सरस्वती |
| १०३. | सूर्यबिम्ब | प्रभा |
| १०४. | मातृमध्य | वैष्णवी |
| १०५. | सतीमध्य | अरुन्धती |
| १०६. | स्त्रीमध्य | तिलोत्तमा |
| १०७. | चित्रमध्य | ब्रह्मकला |
| १०८. | [१]सर्वप्राणी वर्ग | शक्ति |



१. शक्त्यङ्क, गीताप्रेस, गोरखपुरतः साभारं संगृहीतः।

# पञ्चमोऽध्यायः
# शिवशक्त्योः यामलभावः

---

### शक्तिः शक्तिमांश्च

तत्र शक्तिः— ''**सर्वज्ञान क्रियारूपा शक्तिरेका हि शूलिनः।**
**इच्छाज्ञानक्रियाद्या यत्प्रभवाः कार्ययोनयः॥**''

इति वचनानुसारमेकैव सती इच्छाज्ञानक्रियादिरूपेण बहुधा भिद्यते।

**एक एव शिवस्तद्वच्छक्तिरप्यविकारिणी।**
**लययोगाधिकारेषु तौ हि चिन्मात्ररूपिणौ॥**

इत्यनेन च एकस्यैव शिवस्य तस्याः शक्तेश्च औपचारिकाः भेदाः उच्यन्ते। एते भेदाश्च तत्रैव वर्णिताः; तथाहि—

**एकैव खलु चिच्छक्तिः शिवस्य समवायिनी।**
**त्रिविधोपाधिसंभेदाल्लयभोगाधिकारिणी ॥**
**तयैतयाऽभिसम्बन्धादेको देवस्त्रिधा भवेत्।**
**शिवः सदाशिवोऽधीशो लयभोगाधिकारवान्॥**

इति शक्तेर्लक्षणं, शक्तिस्तु शक्तिरप्रतिघोदारेत्यादिश्लोकेषु विस्तरेण वर्णितम्।

**कामानपि बहूनेकः कल्पवृक्षः प्रयच्छति।**
**चिन्तामणिश्च विविधानचिन्त्यमहिमा यथा॥**
**तथाऽनाहितसंस्कारविशेषैकस्वरूपिणी ।**
**चिदचिन्त्याविभोः शक्तिरेषार्थक्रियाविधौ॥**

इत्यादिना च शक्तेर्माहात्म्यातिशयस्तत्र प्रदर्शितः। अत्रैव श्रीकण्ठेन चिदद्वय-वादोऽपि विस्तरेण समालोच्येते।

शिवशक्त्योरभेदस्तु नात्र स्वीक्रियते। श्रीकण्ठेन हि—''तयोर्भेदोऽधुनोच्यते'' इत्यादिना शक्तिशक्तिमतोर्भेदो युक्तिपुरस्सरं साधितः। तथाहि—''परानपेक्षं रूपं यद्विज्ञानं शिवसंज्ञितम्। तस्य शक्तिं परापेक्षं रूपमाहुर्विपश्चितः। आकारद्वयसंवित्तिरशेषस्यापि वस्तुनः। परापेक्षानपेक्षाभ्यामस्ति शक्तिः शिवाश्रया। तेन शक्तिः परापेक्षं रूपमीशस्य युज्यते।'' इत्यादिना परापेक्षानपेक्षाभ्यां शिवशक्त्योर्भेदस्तत्र साध्यते। ''न तु शक्तिः परापेक्षा वस्तुतोऽस्तीति केचन'' इत्यादिना च स शक्तिशक्तिमतोरभेदवादिमतं तिलशः खण्डयति, ''अनन्यापि विभिन्नाऽतः शम्भोः सा समवायिनी'' इत्यादिना च प्रकरण-मेतदुपसंहरति। अत्र च—

द्वे शक्ती समवायिन्यो शिवे ज्ञानक्रियात्मके।
आद्या तु संविद् विज्ञानं क्रिया कुण्डलिनी परा॥
ज्ञानशक्त्या विजानाति क्रियया कुरुते जगत्॥
क्रिया हि फलदा पुंसां न ज्ञानं स्यात् फलप्रदम्।
ताभ्यां न विरहस्तस्य ते च न स्तः शिवं विना॥

## शक्तिशिवौ

दीक्षा चेयं शक्तिपाताधीना। शक्तिपातश्चानुग्रहकरणं नाम शिवस्य कृत्यम्। तत्र कोऽयं शिव इति जिज्ञासायामत्र पतिः शिवः उक्तः। अत्र कुमारः शिवशब्देन जात्येकवचनेन शिवयोगिनां मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वर-मुक्तात्म-शक्ति-शिवानां सवाचकानां शिवतत्त्वप्राप्तिसाधनेन दीक्षादिनोपायकलापेन सह पतिपदार्थे संग्रहं करोति।

**मुक्तात्मानोऽपि शिवाः किन्त्वेते यत्प्रसादतो मुक्ताः।**
**सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्र तनु॥**

इत्यादिना मुक्ताद्यपेक्षया पञ्चमन्त्रतनुत्वं नाम शिवस्य वैलक्षण्यं प्रतिपाद्यते। भगवानवधूतसिद्धश्च—"परमशिवः सिद्धान् प्रत्युपरताधिकारोऽप्यन्येष्वनुपरताधिकारः। सिद्धः पुनरेकान्तेन सर्वत एतो परताधिकार इति भेदः" इत्येवं परमशिवस्य मुक्तात्मनश्च शिवस्य भेदं निर्दिशति। सततोदितः प्रभुः शान्त इत्यनेन च भगवतः शिवस्य सततोदितं (नित्योदितं) शान्तोदितं चेत्यवस्थाद्वयं तथैव सूच्यते, यथा हि पाञ्चरात्रागमेषु परस्य व्यूहात्मनश्च भगवतो वसुदेवस्य नारायणस्य वा तदेतद्दशाद्वयं वर्ण्यमानमास्ते। लयभोगाधिकारभेदेन, शक्तोद्युक्तप्रवृत्तभेदेन, सकल-सकल-निष्कल-निष्कलस्वरूपमुखेन च तस्यावस्थात्रयवत्त्वमपि तत्र तत्र वर्ण्यते। जीवोन्मुखस्य शिवस्यावस्थात्रयमेतत्। एवमेव शिवोन्मुखस्य जीवस्याप्यवस्थात्रयं सांसिद्धिकादि-गुणत्रयं चोत्पद्यमानं शास्त्रेषु वर्ण्यते। तदेतदग्रे भविष्यति।

## शक्ति-शक्तिमतोरभेदपरिकल्पना

निष्पन्दतां शक्तिपदे सततं भजतां चिदचित्कालितोच्छ्रितत्वात्, एवं चतुर्विधमधिश्रितत्वात्, बीजमात्रविश्रान्तिभाक् शक्तिः मानवीयवटबीजान्तर्गतवटवृक्षीय-सूक्ष्मरूपतुल्यशब्दसृष्टिसूक्ष्मरूपशालिनी शक्तिः त्रिपुरसुन्दरी एव। तादृशशक्तेःसूक्ष्म-रूपत्वन्तु प्रवृत्तिनिमित्तकपरापदवाच्या। सैव भाति प्रकाशयतीति मातृकाशक्ति-रित्युच्यते।

सा शक्तिप्राप्तोपभोगकालानां कर्मणां मुक्तिदायिनी सिसृजां हि पराशक्तेः शब्दार्थविषय उच्यते। सुषुप्तावज्ञानमात्रावच्छिन्नस्य जीवस्य स्वप्नदशायां ईषत् प्रष्ट-व्यव्यवहारायान्तःकरणमुपाधिरिष्यते तथा जागरणे विस्पष्टव्यवहाराय स्थूलशरीर-

ब्रह्मोवाच—

सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवशिष्ठकश्यपा ऋषयः। गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांसि। अग्निर्वायुः सूर्यो मित्रावरुणौ रुद्रो विश्वेदेवा देवताः। श्वेतश्यामनीललोहितपीतपिशङ्गकनकवर्णाः। षड्जर्षभः गान्धार-पञ्चमधैवतमध्यनिषादाः स्वराः। पृथिव्यप्तेजोवाय्वाकाशदिगात्मनो बीजानि।

याज्ञवल्क्य उवाच—

कति शक्तयः। कति तत्त्वानि। कत्यग्नयः। कति मुद्राः। कति फलानि।

ब्रह्मोवाच—

श्रीकीर्तिमायाधृतिमेधास्मृतिवाचः[1] शक्तयः।

शब्दस्पर्शरूपरसगन्धमनोबुद्ध्यस्तत्त्वानि। आवाहनीयगार्हपत्यदाक्षिणाग्नि-सभ्यावसथ्यसंवर्तवाडवा अग्नयः। विततसमाञ्जलिशकटविस्तृतयमपाशव्यापक-मुद्राः। प्राणापानव्यानोदानसमानचित्ताहंकारजनितपापोपशमनं फलम्।

याज्ञवल्क्य उवाच—

कति सन्ध्या, के वर्णाः कति स्वरूपाणि।

**ब्रह्मोवाच**

पूर्वा सन्ध्या गायत्री। मध्यमा सन्ध्या सावित्री भवति। पश्चिमा सन्ध्या सावित्री (सरस्वती) भवति। उत्तरा सन्ध्या सावित्री भवति। रक्तवर्णा गायत्री। श्वेतवर्णा सावित्री। कृष्णवर्णा सरस्वती। पीतवर्णा तुरीया। प्रातः सन्ध्या गायत्री बालाकुमारी रक्ताङ्गी रक्तवर्णा रक्तपद्मासनस्था रक्ताम्बरधरा रक्तगन्धानुलेपना रक्तपुष्पमालाधरा चतुर्मुखा चतुर्भुजा द्विनेत्राऽक्षमालाकमण्डलुस्रुवस्रुग्धारिणी सर्वाभरणभूषिता हंसवाहना ऋग्वेदमुद्गिरन्त्याहवनीयमध्यस्था ब्रह्मदैवत्या चतुष्पदाऽष्टकुक्षिः सप्तशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मैका वचा साङ्ख्यायनसगोत्राऽऽदित्यमण्डलगामिनी कालज्ञाने विनियोगः। इत्येषा वै प्रातः सन्ध्यागायत्री। इति सगुणमूर्तिं ध्यात्वा (येत्)। अथ निर्गुणध्यानम् हृदि विकसितपद्मं सार्कसोमाग्रबिम्बम्। प्रणवमयमचिन्त्यं यस्य पीठं (प्र) कल्प्यम्। अचलपरमसूक्ष्मं ज्योतिराकाशसारं। स भवति मनसा मे वासुदेवः प्रतिष्ठा।

मध्याह्नसन्ध्या सावित्री श्वेताङ्गी श्वेतवर्णा श्वेतपद्मासनस्था श्वेताम्बरधरा श्वेतगन्धानुलेपना श्वेतमाल्यधरा पञ्चमुखी त्रिनेत्रा दशभुजा त्रिशूलडमरुपाशासिशङ्ख-चक्रगदाकपालवरदाभयधारिणी सर्वाभरणभूषिता युवती वृषभवाहना यजुर्वेद-मुदाहरन्ती रुद्रदैवत्या गार्हपत्यमध्यस्था चतुष्पदाऽष्टकुक्षिः पञ्चशीर्षाऽग्निमुखा रुद्र-

---

१. गायत्रीपुरश्चरणपद्धति—(श्रीमच्छङ्कराचार्य विरचिता—घारे इत्युपनामकशङ्करसूरविरचिता च—पृ० १२६-१३१।

शिखाविष्णुहृदया ब्रह्मकवचा साङ्ख्यायनसगोत्रा कर्मज्ञाने विनियोगः। इत्येषा वै मध्याह्नसन्ध्या सावित्री। इति सगुणध्यानम्।

**अथ निर्गुणम्**

**हृदयकमलमध्ये दीपवद्वेदसारं[1] प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम्।**
**हरिगुरुशिवयोगं सर्वभूतस्थमेकं सकृदपि मनसा वै ध्यायते यः स मुक्तः॥**

सायंसन्ध्या सरस्वती वृद्धा कृष्णवर्णा कृष्णपद्मासनस्था कृष्णाम्बरधरा कृष्णगन्धानुलेपना कृष्णमाल्यैकमुखी चतुर्भुजा द्विनेत्रा शङ्खचक्रगदापद्मधारिणी सर्वाभरणभूषिता गरुड़वाहना सामवेदमुद्गिरन्ती दक्षिणाग्निमध्यस्था विष्णुदैवत्या चतुष्पदाऽष्टकुक्षिः सप्तशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा साङ्ख्यायनसगोत्रा सम्यग्विज्ञाने विनियोगः। इत्येषा वै सायंसन्ध्या सरस्वती। इति सगुणध्यानम्। अथ निर्गुणम्—

**विष्णु भास्वच्छरीराङ्गदवलयकलाकल्पहारोदराङ्घि।**
**श्रोणीभूषं सुवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम्।**
**हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयवास-**
**मुद्यद्भासं समुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि[2]॥**

उत्तरा सन्ध्या तुरीया पद्मवर्णा पीतपद्मासनस्था पीताम्बरधरा पीतगन्धानुलेपना पीतमाल्यधरा षण्मुखा षड्भुजा सहस्रनेत्राऽङ्कुरा मुष्टिमुद्गरवज्वरकलशवरदाभ्यधारिणी सर्वाभरणभूषितेन्द्रदैवत्या चतुष्पदाष्टकुक्षिः सप्तशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा साङ्ख्यायनसगोत्रा पूर्णज्ञानं विनियोगः। इत्यैषा वै सन्ध्या तुरीया।

## सीताशक्तिः

यो वै श्रीरामचन्द्रः स भगवान्, या जानकी भूर्भुवः स्वः स्वस्तस्यै वै नमो नमः। (रामतापनीय उपनिषदः)

**कृतान्यनेन सर्वाणि तपांसि वदतां वर।**
**सर्वे तीर्थाः सर्वयज्ञाः सर्वदानानि च क्षणात्।**
**कृतान्यनेन मोक्षाश्च तस्य हस्ते न संशयः[3]॥**

निमेषोन्मेषसृष्टिस्थितिसंहारतिरोधानानुग्रहादिसर्वशक्तिसामर्थ्यात्साक्षाच्छक्तिरिति गीयते॥ (श्री सीतोपनिषद्)

भूर्भुवः स्वः सप्तद्वीपा वसुमती त्रयो लोका अन्तरिक्षं सर्वे त्वयि निवसन्ति। आमोदं प्रमोदो विमोदः सम्मोदः सर्वास्त्वं सन्धत्से। आञ्जनेयाय ब्रह्मविद्याप्रदात्रि धात्रि त्वा सर्वे वयं प्रणमामहे प्रणमामहे।

---

१. तथैव।
२. तथैव
३. अहिर्बुध्न्य संहिता—अ० १७

(श्रीमैथिलीमहोपनिषद्)

रामचरितमानसे यथा—

**उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीम्।**
**सर्वश्रेयस्करीं सीतां नतोऽहं रामवल्लभाम्॥**
**अर्वाची सुभगे भव सीते वन्दामहे त्वा।**
**यथा नः सुभगाससि यथा नः सुफलाससि[1]॥**

जनकस्य राज्ञः सद्मनि सीतोत्पन्ना सा सर्वपरानन्दमूर्तिर्गायन्ति मुनयोऽपि देवाश्च कार्यकारणाभ्यामेव परा तथैव कार्यकारणार्थे शक्तिर्यस्याः, विधात्री श्रीगौरी-णासैवकर्त्री, रामानन्दस्वरूपिणी सैव जनकस्य योगफलमिव भाति। (अथर्वणवेद-उत्तरार्द्ध श्रुतिः)

**जानक्यंशादिसम्भूताऽनेकब्रह्माण्डकारिणी।**
**सा मूलप्रकृतिर्ज्ञेया महामायास्वरूपिणी॥**

(श्रीमहारामायणे शिववचनम्)

**उत्पत्तिस्थितिसंहारकारिणीं सर्वदेहिनाम्।**
**सा सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता॥**

(श्रीरामतापनीय—उत्तरार्द्ध)

**यां सीतेत्यभिजानासि येयं तिष्ठति ते गृहे।**
**कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम्[2]॥**



१. ऋग्वेद—३/८/९
२. वा० रा० सु० ५२/३४

# उपसंहारः

## शक्तेः विश्वरूपानुशीलनम्

तन्त्रागमशास्त्रे शक्तिदेव्याः विविधरूपाणि वर्णितानि। भगवत्याः विश्वरूपत्वमपि तत्र वर्णितम्। तथाहि—

**खड्गं पात्रञ्च मुसलं लाङ्गलञ्च बिभर्ति सा।**
**आख्याता रक्तचामुण्डा देवी योगेश्वरीति च॥**
**जयस्व देवी चामुण्डे जय भूतनिवासिनी।**
**जय सर्वगते देवि कालरात्रि नमोस्तु ते॥**
**विश्वमूर्ते शुभे शुद्धे विरूपाक्षि त्रिलोचने।**
**भीमरूपे शिवे वेद्ये महामाये महोदये॥**
**मनोजवे जये जृम्भे भीमाक्षे क्षुधितक्षये।**
**महामारि विचित्राङ्गि जय नृत्यप्रिये शुभे॥**
**विकराले महाकालि कालिके पापहारिणी।**
**पाशस्ते दण्डहस्ते भीमरूपे भयानके॥**

तत्र शक्तिरूपेषु रक्तचामुण्डा, योगेश्वरी नन्दा, योगमाया इत्यादीनि शक्तेः स्वरूपाणि प्रसिद्धानि सन्ति।

एवञ्च—एकदा मेधाऋषिः सुरथं प्रति चण्डीतत्त्वकथाप्रसङ्गेन जगद्रहस्यमिदमुवाच, मूर्तिरहस्ये दशमश्लोके "अनया व्याप्तमखिलं जगत् स्थावरजङ्गमम्" इति। तथाहि—चराचरमिदं सर्वं जगत् पयशक्त्या भगवत्या महालक्ष्म्या परिव्याप्तमासीत्। एतच्छ्लोकार्धमध्ये शाक्तदर्शनस्य वैशिष्ट्यपूर्णः सिद्धान्तः एव सूचितः।

अद्वैतवेदान्तमते जगत् चित्स्वरूपा परब्रह्मशक्तिर्माया, एषा माया जडा मिथ्या च। अत एव तत्कार्यं जगदपि जडमिथ्या च। शाक्तदर्शनमते तु जगत स्वतःप्रकाशश्चिति शक्तेरुल्लासः। काश्मीरीयाद्वैतदर्शने चितिशक्तेरपरं नाम "विमर्शः"। विमर्शस्य स्वातन्त्र्यशक्तिः स्वतःप्रकाशब्रह्मस्वरूपा। अतस्तच्छक्तेः कार्यं जगदपि सत्यं कदापि मिथ्या न भवति। तत्वमिदं क्रमशः सुस्पष्टं भविष्यति।

चितिशक्तिः शिवाद्वैतदर्शने शाक्ताद्वैतदर्शने च वस्तुतः एकैव। यतः शाक्तदर्शने

---

१. वाराहपुराण—९६/१-४

शिवशक्त्योरभिन्नत्वमखण्डत्वमद्वयत्वञ्च प्रतिपादितम्। न तु अद्वैतवेदान्तमतसिद्धाधिष्ठानवादोपरि तेषां निर्भरः। "प्रत्यभिज्ञाहृदयं" नाम शिवाद्वैतवादस्यान्यतमः प्रसिद्धो ग्रन्थः। राजानक-क्षेमराजेन प्रणीतोऽयं ग्रन्थः (२१ शताब्द्याम्), ग्रन्थारम्भे चितिशक्तेः स्वरूपं, विश्वसृष्ट्यादिव्यापारे चितिशक्तेरेव केवलहेतुत्वञ्च प्रतिपादितम्। उक्तञ्च प्रथमसूत्रे—"चितिः स्वतन्त्रता विश्वसिद्धिहेतुः" विश्वसिद्धेः सृष्टिसंहारादिव्यापारस्य स्वतन्त्रता स्वयंप्रकाशलीला चितिशक्तेरेकमात्रहेतुः कारणम्।

अस्य टीकायामुक्तम्—"विश्वस्य सदाशिवादेर्भूम्यन्तस्य सिद्धौ निष्पत्तौ, प्रकाशने स्थित्यात्मनि, परप्रमातृविश्रान्त्यात्मनि च संहारे, पराशक्तिरूपा चितिरेव भगवती स्वतन्त्रा, अनुत्तरविमर्शमयी शिवभट्टारिकाऽभिन्ना हेतुः कारणम्।" "विश्वस्य" सदाशिवात् स्थूलपृथ्वीपर्यन्तसमस्ततत्त्वस्य सृष्टिप्रलये प्रकाशाऽप्रकाशविषये "चिति" रेव मूलकारणम्। पराशक्तिरूपा भगवती स्वतन्त्रा चैतन्यमयी नाम "चिति" रेषा परशिवतो वा परब्रह्मतो वा अभिन्नरूपा। चितेर्विकाशे जगत उन्मेषोऽस्तित्वं चितेः सङ्कोचे जगतो निमेषोऽप्रकाशत्वं च। सदा शुद्धा स्वतन्त्रा प्रकाशरूपा चितिशक्तिः। अस्याः प्रकाश एवास्यानन्तजगतो विकाशः। अतएव एकाधारे युगपद्विश्वस्य कार्यकारणञ्चोभयं भवति। द्वितीयसूत्रम्—"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति।" चितिशक्तिः स्वेच्छया स्वकीयस्वरूपभित्तेरुपरि विश्वप्रकाशं साधयति।

अस्य विश्वस्य चिच्छक्तितो भिन्नत्वे प्रतीयमानेऽपि वस्तुतश्चित्शक्त्या सहाभिन्नत्वम्। यथा दर्पणप्रतिबिम्बितनगरस्य। "विश्वं दर्पणे नगरवदभिन्नमपि ततो भिन्नमिवोन्मीलयति।" उन्मीलनं सत्ताया अवस्थाविशेषस्य प्रकटीकरणम् स्वप्रकाशचिज्ज्योतिष एव विश्वसत्तारूपेणोन्मीलनं, तस्या एवावस्थान्तरम्। परन्तु विश्वरूपेण यद् दृश्यते, तत्सर्वं चितिशक्तिरेवावस्थाविशेषः। अत एव जगत् सत्यम्।

## षट्त्रिंशत्तत्त्वम्

शाक्तशैवोभयागमे षट्त्रिंशत्तत्त्वानि स्वीकृतानि। तदुक्तं परशुरामकल्पसूत्रे—"षट्त्रिंशत्तत्त्वानि विश्व (१/४) मिति। विश्वमिदं षट्त्रिंशत्तत्त्वात्मकम्। एतेषां नामानि यथा—(१) शिवः (२) शक्तिः (३) सदाशिवः (४) ईश्वरः (५) शुद्धविद्या (६) माया (७) अविद्या (८) कला (९) रागः (१०) कालः (११) नियति (१२) पुरुषो जीवो वा (१३) प्रकृतिः (१४) मनः (१५) अहङ्कारः (१६-२०) श्रोत्रादि पञ्च ज्ञानेन्द्रियाणि (२१-२५) वागादि पञ्च कर्मेन्द्रियाणि (२६-३०) रूपादिपञ्चविषयेन्द्रियाणि (३१-३५) आकाशादि पञ्चभूतानि च। एषु षट्त्रिंशत्तत्त्वेषु चराचरं जगत् निहितमस्ति। तत्र भगवतीशक्तिः प्रमुखा कथ्यते। तया च जगद् निर्मीयते। चितिः, स्वतन्त्रा विश्वसिद्धिहेतुः इति नियमात्। शक्तिरेव शाकम्भरी, चण्डी, भीमा, अन्नपूर्णारूपेषु जगद्बिभर्ति। प्रलये च कालरात्रिरूपेण अनन्तमहाकाशे

नृत्यतः संहाररूपिणो रुद्रदेवस्य देहात् आविर्भूय तस्य पुरोभागे शक्तिः कालरात्रिः नृत्यमकरोत्। भ्रामरीरूपेणापि सा शक्तिः महामारीनाम्ना प्रसिद्धाऽस्ति।

## शक्तिरेव दशमहाविद्या

एकदा विश्वस्रष्टॄणां यज्ञे देवा ऋषयश्च समवेतास्तत्रोपविष्टा आसन्। तत्काले दक्षप्रजापतिरुपस्थितो बभूव। तदा यज्ञस्य आगमने देवा ऋषयश्चोत्थितास्तस्याभिवादनमकुर्वन्। किन्तु शिवः समाधिस्थः स्वाशने पर्यतिष्ठत्। ततः शिवो जामातृत्वेनापि तमवमन्यत इति मत्वा दक्षप्रजापतिरत्यन्तं क्रोधान्वितः सन् शिवं तिरस्कृत्य अद्यावधि यज्ञभागाद् वञ्चितो भविष्यतीति प्रशस्तवान्।

तदनन्तरं शिवविद्वेषपरवशो दक्षप्रजापतिर्महासमारोहेण एकं शिवरहितयज्ञानुष्ठानमारब्धवान्। तस्मिन् यज्ञे शिवसत्यौ विना सर्वे देवाः ऋषयश्च निमन्त्रिता उपस्थिताश्च बभूवुः। अस्मिन्नेवावसरे सती पितृगृहे यज्ञवार्तां श्रुत्वा सुहृद्दिदृक्षुमना कौतुकेन यज्ञदर्शनार्थं दक्षालये गन्तुं शिवं प्रार्थयति। शिवस्ताम् अनाहूता कार्योपलक्षे पित्रालयेऽपि गन्तुं नोचितमिति बारम्बारं प्रबोध्य निषेधयामास। तदुक्तं श्रीमद्भागवते—

**सुहृद्दिदृक्षा प्रतिघातदुर्मनाः स्नेहाद् रुदत्यश्रुकलातिविह्वला।**
**भवं भवान्यं प्रतिपुरुषं रुषा प्रवक्षती वैक्षत जातवे पशुः॥**

प्रतिहतसुहृद्गणदर्शनेच्छा सती दुर्मना इव स्नेहवशतो रोरुद्यमानाऽश्रुधारमभिभूयमाना च परमपुरुषं महादेवं रुषा भस्मात् कर्तृमना इव प्रकम्पितकलेवरा कोपदृष्ट्या देवदेवमैक्षत।

अत्रान्तरे महाक्रोधेन सती दशमहाविद्यारूपधारणेन दशो दिशं आच्छाद्य शिवमतीव विभ्रान्तमकरोत्। तदुक्तं बृहद्धर्मपुराणे—

**ततः क्रुद्धा महाकाली घोररूपमकल्पयत्।**
**ततो भयेन भूतेशः पलायनपरोऽभवत्॥**

ततो दाक्षायणी क्रोधपरवशतया महाघोररूपमहाकालीमूर्तिं धृतवती। तदालोक्य भूतेशो पलायनपरोऽभवत्। तं धावमानं गिरीशं दृष्ट्वा दयापरतया देवी मा भैर्मा भैरिति गिरा मा पलायस्वेत्युक्त्वा तन्निवारयति। तथापि शिवं पलायमानमनिर्वर्तनं विलोक्य पुनस्तन्निवारणाय दशदिक्षु शिवेक्षिता दशमूर्तिधारणेन प्रकाशिताऽभवत्। उक्तं च—

**सम्प्रार्थ्य मामनुप्राप्य पत्नीभावेन शङ्करः।**
**मामवज्ञाय वचनं भासतेऽपि सुदारुणम्॥**
**त्यक्त्वैनमपि दर्पिष्ठं पितरञ्च प्रजापतिम्।**
**संस्थास्यामि कियत् कालं स्वस्थानं निजलीलया॥**
**ततश्च प्रार्थितानेन भूत्वा हिमवतः सुता।**
**शम्भोः पत्नी भविष्यामि भूयोऽहं स्वयमेव हि॥**

शङ्करः सम्यक् सम्प्रार्थ्य मां पत्नीभावेन प्राप्तः सन्निदानीं मामवज्ञाय निदास्य वाक्यमवदत्। अत्यन्तदीप्तिशङ्करमेव पितरं प्रजापतिञ्च परित्यज्य निजलीलावशतः कियत् कालं स्वधाम्नि स्थास्यामि। ततः शङ्करस्य प्रार्थनया पुनर्हिमालयस्य कन्या-रूपेणावतीर्णाहमेव स्वयं शम्भुपत्नी भविष्यामि। दाक्षायणी सतीत्येवं चिन्तयित्वा सहसा कमलवदनां भयङ्करीं मूर्तिं धारयन्तीं अट्टाट्टहासमकरोत्। तच्छ्रुत्वा महाभीत-चेताः शिवो विमूढोऽभवत्।

**त्यक्त्वा हैमिं रुचिं प्रासीत् कृष्णाञ्जनसमप्रभा।**
**दिगम्बरमलत्केशा लोलजिह्वा चतुर्भुजा॥**
**कामालसद्देहा स्वेदाक्ततनुरुल्वना।**
**महाभीमा घोररावा मुण्डमाला विराजिता॥**
**उद्यत्प्रचण्डकोदण्ड चन्द्रार्ध कृतशेखरा।**
**उद्यदादित्यसंकाशकिरीटोज्ज्वलमस्तका ॥**

अनन्तरं सती तस्याः स्वर्णकान्तिं परित्यज्य घोराञ्जनवत् कृष्णवर्णाऽभूत् अपि च नग्नातिलम्बमानकेशा लोलजिह्वा चतुर्भुजा कामजनितलास्योल्लासितदेहा तज्जन्यस्वेदाक्ता इव प्रलयमानाभूत्। सा देवी महाभयङ्करी घोरनिनादकारिणी मुण्डमालाविभूषिता, एवं देवी अङ्गप्रभया उदीयमानकोटिसूर्यतुल्या चन्द्रार्धशेखरा देदीप्यमानसूर्य्यसदृशोज्ज्वलकिरीटमस्तका च बभूव। महेश्वरोऽतिभीषणां तन्मूर्तिं दृष्ट्वा नितरां महाभीतः पलायनमकरोत्। किन्तु यस्यां यस्यां दिशि प्रधावति तत्र तत्रैव मूर्तिमेकां दृष्ट्वा प्रतिनिवृत्तो बभूव।

**एवं पतिं वीक्ष्य भयाभिभूतकं,**
**दयान्विता तत् प्रतिवारणेच्छया।**
**सर्वासु दिक्षु क्षणमात्रमध्यतः,**
**स्थिता च भूत्वा दशमूर्त्तयस्तदा॥**

तथा च—एवं पतिं शिवं भयाभिभूतं दृष्ट्वा देवी दयापरवशतया तस्य प्रति-निवारणेच्छया च क्षणत्तलमध्ये दशमहाविद्यामूर्तिधारणपूर्वकं दशदिशो व्याप्यातिष्ठत्।

**सन्धावमानो गिरीशोऽतिवेगतः,**
**प्राप्नोति यां यां दिशमेव तत्र ताम्।**
**भयानकां वीक्ष्य भयेन विद्रुतो,**
**दिशं तथान्यां प्रति चाभ्यधावत॥**

गिरिशोऽतिवेगेन यां यां दिशं प्रत्यधावत्, तत्र तत्रैव भयङ्करीं मूर्तिमवलोक्य भयेन पलायनं कृत्वा तस्मादन्यद्दिशं प्राधावत्।

**न प्राप्य शम्भुस्तु भयान्वितो दिशं,**
**तत्रैव संमुद्रित चक्षुरास्थितः।**

**उन्मील्य नेत्राणि ददर्श तां परः,**
**श्यामं लसत्पंकजसन्निभाननाम्॥**

भयाभिभूतः शम्भुः पलायनपथमदृष्ट्वा तत्रैव मुद्रितनयनोऽतिष्ठत्। कियत्-कालानन्तरं नयनत्रयमुन्मील्य नीलोत्पलसदृशाननां दैवीमवैक्षत।

**हसन्मुखीं पीनपयोधराधरां,**
**दिगम्बरां भीषणभीमलोचनाम्।**
**विमुक्तकेशीं रविकोटिसन्निभां ,**
**चतुर्भुजां दक्षिणसम्मुखस्थिताम्॥**

सा देवी हास्यमुखी पीनोन्नतपयोधरा दिगम्बरा भयङ्करी विशालनेत्रत्रयविशिष्टा मुक्तकेशी कोटिसूर्यतुल्यप्रभाशालिनी चतुर्भुजा दक्षिणाभिमुखावस्थिता च।

महाभीतो महादेवस्तां देवीमप्रच्छत्। हे देवि! का त्वं श्यामा मम प्राणवल्लभा सती क्व गता? देव्युवाच—

**न पश्यसि महादेव सतीं मां पुरतः स्थिताम्।**
**कथं तवेदृशी बुद्धिः किं मां त्वं लक्ष्यसेऽन्यथा॥**

हे महादेव! अहं सती तव सम्मुखेऽवस्थितास्मि। कथं वा तवेदृशी बुद्धिर्भवति। कथं मां त्वमन्यप्रकारां पश्यसि। शिवोऽवदत्— त्वं यदि मम प्राणवल्लभा दक्षकन्या सती, तत् कथं वा कृष्णवर्णा कथं वा पृथिव्यां भयप्रदा भवसि दशदिक्ष्वव-स्थिता अतीवभीषणाः कास्तावदेता देव्यः। सत्युवाच—

**अहन्तु प्रकृतिः सूक्ष्मा सृष्टिसंहारकारिणी।**
**अभवं तद्वनितायै त्वदर्थे गौरदेहिका॥**
**त्वामेव लिप्सुः पुरुषः प्राक्स्वीकृतवशाच्छिवः।**
**अभवं तन्तुमाभीतिं कुरुमत्र महेश्वर॥**

सत्युवाच— हे शिव अहं सृष्टिस्थितसंहारकारिणी सूक्ष्मा प्रकृतिः पूर्व-स्वीकृतिवशतः पुरुषरूपिणं त्वां प्राप्तुमिच्छया तद्वनितारूपेण त्वदर्थं गौरदेहं धारयामि। साहं पितुर्महायज्ञविनाशाय भयङ्करीं मूर्तिं धृतवती। हे महेश्वर! त्वं मत्तो भीतिं मा कुरु—

**दक्ष दिक्षु महाभीमा या एतादृशमूर्तयः।**
**सर्वा ममैव मा शम्भोः भयं कुरु महामते॥**
**त्वं शिवं मत् समो भर्ता तवाहं वनिता सती।**
**त्वां दृष्ट्वाहं महाभीतं धावमानं दिशो भयात्॥**
**परिवार्य्य दिशः सर्वास्तवाहं दशधा स्थिता॥**

हे शम्भो! दश दिक्षु या एता महाभीमा दशमूर्तयः, ताः सर्वा एव मम मूर्तयः। हे महामते! भयं मा कुरु त्वं मम प्राणतुल्यः स्वामी, अहं तवैव वनिता

सती। त्वामहं महाभीतचित्तं दशदिक्षु धावन्तं दृष्ट्वा, दशदिश परिवार्य्याऽहमेव दश-रूपेणावस्थितास्मि।

शिव उवाच—हे महादेवि महामोहवशतोऽहं तव स्वरूपं विस्मृत्य, विप्रियं वाक्यमकथयम्। हे परमेश्वरि क्षमस्वैतदपराधम्। यास्तवैता महाभीमा मूर्तयः आसां नामानि मह्यं कथय। देव्युवाच—

**एताः सर्वा महादेव महाविद्या समप्रभा।**
**आसां नामानि वक्ष्यामि शृणु तानि महेश्वर॥**
**काली तारा महाविद्या षोडशी भुवनेश्वरी।**
**भैरवी छिन्नमस्ता च सुन्दरी बगलामुखी॥**
**धूमावती च मातङ्गी नामान्यन्यानि वै शिव॥**

देव्युवाच—

हे महेश्वर! एता सर्वा एव महाविद्याः सदृशप्रभायुक्ताः; आसां नामानि च शृणु— (१) काली (२) तारा महाविद्या (३) षोडशी (४) भुवनेश्वरी (५) भैरवी (६) छिन्नमस्ता (७) सुन्दरीकमला (८) बगलामुखी (९) धूमावती (१०) मातङ्गीति।

एवं प्रकारेण द्वे शक्तिमुखादेव दशमहाविद्यानां स्वरूपाणि तंत्रशास्त्रे व्याख्यातानि। आसां विद्यानां उपासनाविधिरपि तत्र तत्र महता समारोहेण वर्णिता दृश्यते। जगद्धात्री शक्तिरेव समग्रस्य जगतः समग्रलोकानाञ्च सञ्चालनम् करोति। शक्तेः महिमानं वेदेषु पुराणेषु दर्शनेषु सर्वत्रैव गीयते।

**शिवशक्तिसामरस्यमेव तत्त्वातीतसत्ता**

प्रागुक्तषट्त्रिंशत्तत्वव्यतिरिक्तस्तत्वातीतः एकः पदार्थो वर्तते, यो हि विश्वव्यापकः सन्नपि विश्वतः पृथगेव विद्यते, अतएव स युगपद् विश्वात्मको विश्वोत्तीर्णश्चेति। सदाशिवतः पृथ्वीपर्यन्तं चतुस्त्रिंशत्तत्त्वानि विश्वम्, यस्य तत्त्वस्येदं विश्वमुन्मेषमात्रं तदेव तत्त्वं "शक्ति" पदवाच्यम्। "सृष्टि" शब्देन सदा शिवप्रभृतितत्त्वसमूहस्य क्रमश आविर्भावो बोध्यः। या खलु तत्त्वाविर्भावबीजस्वरूपा, यस्याश्च क्रमविकाश्च एव विश्वं, सैव "शक्ति" रित्यभिहिता।

शिवः सदा शक्तियुक्तो वर्तते। शक्तेरन्तर्मुखित्वे "शिवः" (अन्तर्लीनविमर्शः) शिवस्य च बहिर्मुखत्वे "शक्ति"-रभिहिता। अन्तर्मुखत्वं बहिर्मुखत्वं चेति भावद्वयं सनातनम्। शिवतत्त्वे शक्तिभावो गौणः, शिवभावः प्रधानः। शक्तितत्त्वेऽपि शिवभावो गौणः, शक्तिभावः प्रधानः। परन्तु यत्र शिवशक्त्योरेकस्तत्र द्वयोरप्यप्राधान्यम्। सैव साम्यावस्था, "तत्त्वातीता"वस्था चेति, सैव हि "शिवशक्तिसामरस्यम्"। केषांचिन्मते तत्त्वानि सप्तत्रिंशत्सङ्ख्यकानि। केचिद्वदन्ति, एतद्विषये किमपि वक्तुं चिन्तयितुं वाऽपि न शक्यत, इति। चरमतत्त्वमिदं शैवाः परमशिवं, शाक्ताश्च परम-

शक्तिमभिदधति। परमशिवोऽस्य विश्वस्योन्मीलनं स्वयमेव करोति। कस्याप्युपादानस्याधारस्यापि वाऽऽवश्यकता नास्ति। परमस्वातन्त्र्यशक्तिसम्पन्नः स्वेच्छया स्वभित्तौ स्वाधारे च जगदुन्मीलनं करोति। पूर्वमपि परमशिवे जगदासीत्। यथार्थमेवाचार्यो वसुगुप्तोऽवदत्—

**निरुपादानसंसारमभित्तावेव तन्वते।**
**जगच्चित्रं नमस्तस्मै कलानाथाय शूलिने॥**

## चरमतत्त्वम्

साधकाः रुचेर्वैचित्र्यानुसारतः "चरमतत्त्वं" केचन "पुरुषभावेन" केचन "रमणीभावेन" वा व्याचक्षते। प्रत्यभिज्ञादर्शनस्य परमशिवः, त्रिपुरामतस्य षोडशी देवी ललिता देवी वा, वैष्णवमतस्य च श्रीकृष्णः एकोऽद्वितीयः सच्चिदानन्दस्वरूप इति। अतएव ते तु परतत्त्वस्य भिन्नं भिन्नं प्रतीकमात्रमेव। मूलतस्तु तद् वस्तु न पुरुषो नापि प्रकृतिः, परन्तु तयोरभेदात्मकं सामञ्जस्यमात्रम्। जगति यानि सौन्दर्याणि वर्तन्ते, तानि सर्वाण्येव तावदस्याखण्डपूर्णसौन्दर्यस्वरूपस्य कणमात्रं, छायामात्रं, विभूतिमात्रम्वा। "तस्य भासा सर्वमिदं विभाति"। तस्यैव ज्योतिःप्रकाशनेन सर्वं वस्तुजातमनुप्रकाशितम्। पूर्णसौन्दर्यस्वरूपपरतत्त्वमेकैकस्थातुमनिच्छयैव कालोपरि महाकालस्योर्ध्वे प्रस्फुटितम्भूत्वा स्वात्मानमेव खण्डसौन्दर्यमयजीवजगद्रूपेण प्रकटितं कृत्वा स्वयमेवावस्वादयति, अथवा स्वात्मनि स्वप्रतिबिम्बं दृष्ट्वा स्वयमेवावस्वादयति। एतत् प्रतिबिम्बमेव विश्वम्।

श्रीनटनानन्दनाथः "चिद्वल्ली" नाम्न्यां कामकलाविलासटीकायां दृष्टान्तेन तत्त्वमिदं प्रबोधयति, यथा कश्चिदतिसुन्दरमूर्तिमान् राजा स्वसम्मुखावस्थिते स्वच्छे दर्पणतले स्वप्रतिबिम्बं सम्यक् प्रसमीक्ष्य तत्प्रतिबिम्बमहमिति जानाति, तथैव परमेश्वरोऽपि स्वाधीनभूतां स्वशक्तिं सम्यगवलोक्य स्वस्वरूपमवगच्छति। परिपूर्णोऽहमितीयमेव नाम "पूर्णाहन्ता"। तथैव परमशिवसङ्गहेतुत्वात् परा शक्तिः स्वात्मन्यवस्थितं प्रपञ्चं निर्गमयति। अस्य प्रपञ्चस्यैव नाम "विश्व" मिति। गौडीयवैष्णवशास्त्रेऽप्युक्तम्—"भगवान् स्वरूपं दृष्ट्वा स्वयमेव मोहितोऽभव" दिति।

चमत्कारिणीयं पूर्णाहन्ता, चमत्कारी चायं कापः, प्रेम च तस्यैव प्रकाशः। एष हि शिव-शक्ति-सम्मेलनस्या "दिरसः" शृङ्गाररसो वा। विश्वसृष्टिः रसत्वमूले प्रतिष्ठिता।

## साधनाभासः

प्रसङ्गादत्रोच्यते—वैदिकाचारे साधनायाः "षड्भावाः" कथ्यन्ते। (१) शान्तभावः, स च पितृभावो मातृभावश्चेति। "पितृभाव" साधकः प्रह्लादो ध्रुवश्च। मातृभावसाधकः समाधिः सुरथश्च। (२) सख्यभावसाधकोऽर्जुनो विभी-षणश्च। (३) दास्यभावसाधको हनुमान् गरुड़श्च। (४) वात्सल्यभावसाधको नन्दो यशोदा

चेति। (५) मधुरभावसाधका: गोपा: गोप्यश्च। (६) ''द्वेषभाव'' साधका: कंसमहिषासुरादय:। ''आसनम्'' स्थिरसुखमासनम्। तदुक्तं कालिकापुराणे दुर्गाचार्या योगपीठध्याने—

**सारासनं योगपीठं सुखासनमतः परम्।**
**आराध्यासनमस्माच्च ततश्च विमलासनम्॥**

सारासन-सुखासनाराध्यासन-विमलासनान्येतानि चत्वारि आसनानि च गुरुमुखाज् ज्ञातव्यानि। ''पञ्चधा मुक्तिरुक्ता'' पद्मपुराणे—

**सालोक्यमपि सारूप्यं सामीप्यं सार्ष्टिनामकम्।**
**सायुज्यमपि पञ्चानां फलान्येवं विदुः क्रमात्॥**

तथाहि—(१) ''सालोक्यमुक्तिः'' देवीदेवयोरेकत्र वासः। (२) सार्ष्टिः देवीदेवयोः सममैश्वर्यलाभः (३) सामीप्यमुक्तिः देवीदेवयोः सन्निध्यलाभः (४) सारूप्यमुक्तिः देवीदेवयोः समरूपतालाभः। (५) सायुज्यमुक्तिः देवीदेवयोरभेदवत्वलाभः। उक्तञ्च देवीभागवते—

**परानुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रितः।**
**स्वाभेदेनैव मां नित्यं जानीति न विभेदतः॥** ७/३७/१५

यस्य परभक्तिलाभो जायते, स साधकोऽनलसो भूत्वा परमानुरागेण केवलं मामेवैकान्तिकभावेन चिन्तयन् परिशेषे ''अहमेव सच्चिदानन्दरूपिणी भगवत्यस्मी''-ति भावनयाऽभित्वेन जानाति।

**इत्थं जाता परा भक्तिर्यस्य भूधरतत्त्वतः।**
**तदेव तस्य चिन्मात्रे मद्रूपे विलयो भवेत्॥** ७/३७/२७

हे भूधर! यथार्थतो यस्यैतादृशी पराभक्तिरुदिता भवेत्, स साधकस्तत्क्षणान्मम चिन्मयरूपे विलीनो भवेत्। एषैव हि देवी-सायुज्यमुक्तिः। उक्तञ्च कुलार्णवतन्त्रे—

**यथा जले जलं क्षिप्तं क्षीरे क्षीरं घृते घृतम्।**
**अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः॥** ९/१५

यथा जले जलं, दुग्धे दुग्धं, घृते घृतं निक्षिप्तं सत्पार्थक्यहीनं जायते, साकल्येन सम्मिलितमेव भवति, तथैव परभक्तिप्रभावसम्मिलितयोर्जीवात्मपरमात्मनोरेकत्वं सम्पद्यते। पाञ्चरात्रागमान्तर्भुक्त-जयाख्यसंहितायामेतादृशी मुक्तावस्था वर्ण्यते—

**यथानेकेन्धनादीनि सम्प्रविष्टानि पावके।**
**अलक्ष्यान्येव दग्धानि तद्वद्ब्रह्मण्युपासकाः॥**
**सरित्सङ्घाद् यथा तोयं संप्रविष्टं महोदधौ।**
**अलक्ष्यश्चोदके भेदः परस्मिन् योगिनां तथा॥** ४/२२-२३

यथाग्निप्रक्षिप्तदग्धकाष्ठसमूहः पृथक् पृथङ्न लक्ष्यते, तथैवोपासनायाश्चरमावस्थायां परब्रह्मणि लीनः साधकोऽपि परब्रह्मीभवति, पृथक्त्वेन नास्तित्वं भजते।

यथा विभिन्ननदीजलानि समुद्रं प्रविश्य साकल्येन लीयन्ते, न भेदेन दृश्यन्ते, तथा योगिनोऽपि साकल्येन परब्रह्मणि विलीयन्ते। यथोक्तं मुण्डकोपनिषदि—

**यथा नद्यः स्यन्दमानाः समुद्रे-**
**ऽस्तं गच्छन्ति नामरूपे विहाय।**
**तथा विद्वान् नामरूपाद् विमुक्तः**
**परात्परं पुरुषमुपैति दिव्यम्॥**

यथा प्रवहमाणो नदीसमूहो नामरूपे विहाय, समुद्रेऽदृश्यो भवति, तद्वत् ज्ञानिजनोऽपि नामरूपे विहाय परात्परे दिव्यपुरुषे प्रविशतीति तान्त्रिकानामाकूतम्।

## ब्रह्माद्वैतवाद ईश्वराद्वयवादश्च

प्रत्यभिज्ञादर्शनं त्रिकदर्शनं वा सम्पूर्णमेवाद्वैतवादी। अयमद्वैतवादस्तु ''ईश्वराद्वयवाद'' नाम्नाऽभिहितः। श्रीमच्छङ्कराचार्यप्रचारितो ''ब्रह्माद्वैतवाद'' एवाभिनवगुप्तादिशैवाचार्यगणव्याख्यातः ''ईश्वराद्वयवादः''। परन्तु एतयोर्मध्ये कथञ्चिद् भेदोऽपि वर्तते। ब्रह्माद्वैतवादे विश्वोत्तीर्ण-निर्मल-निर्विकार-ब्रह्मणि कर्तृत्वं नास्ति। किन्त्वीश्वराद्वयवादे परमशिवे स्वातन्त्र्यशक्तिसम्पन्नता विद्यते, अत एव हि कर्तृत्वमस्ति। स हि परमशिवः सृष्टि-स्थिति-संहारानुग्रह-विलय-प्रभृतिपञ्चकृत्यानां सम्पादकः।

अज्ञानस्य मायाया वा स्वरूपसम्बन्धेऽद्वैतवेदान्तस्य व्याख्यया प्रत्यभिज्ञावादी सन्तुष्टो न भवति। अज्ञानप्रवृत्तिः कस्मात् कथञ्च भवेत्? अज्ञानस्य प्रथमाविर्भावकारणं वा किम्? कस्य वशीभूतत्वेन ब्रह्म जीवरूपेण, अथवा अधीश्वरत्वेन-ईश्वररूपेण प्रकटितं भवति? अद्वैतवेदान्ते स्पष्टमुत्तरमस्य न प्राप्यते। किन्तु प्रत्यभिज्ञादर्शने निम्नोक्तरूपेणास्य व्याख्या दृश्यते—

ईश्वरवादेऽपि अज्ञानं माया च विद्येते। किन्त्वस्याः प्रवृत्तिराकस्मिकी न भवति। तदिदं परमेश्वरस्य स्वातन्त्र्यमूलकं स्वेच्छया परिगृहीतं रूपम्। नटो यथा ज्ञातसारेणैव नानाप्रकारां भूमिकां करोति, तथा परमेश्वरोऽपि स्वेच्छया नानाप्रकारां भूमिकां गृह्णाति। परमेश्वरः स्वतन्त्रः, स खलु निजस्वरूपमावरितुं प्रकटयितुं च समर्थः। किन्तु यदा निजस्वरूपमावृणोति, तदापि सोऽच्युतरूपेणैव तिष्ठति। तदेतत् सूर्यमेघयोर्दृष्टान्तेन बोध्यम्। सूर्यः स्वोत्पादितमेघसमूहेन निजरूपमावृणोति किन्त्वाच्छादितोऽपि सोऽनाच्छादितत्वेन वर्तते। अन्यथा को मेघसमूहं प्रकाशयेत्? परमेश्वरसम्बन्धेऽपि तद्वदेव बोध्यम्। अज्ञानं माया च तस्य स्वातन्त्र्यशक्तेर्विजृम्भणमात्रम्। संसारसृष्टिमार्ये लीलापरायणस्य परमेश्वरस्य लीलैव मुख्यकारणम्।

**आभासवादः**

परमेश्वरस्य जगतश्च परस्परं कः सम्बन्धः? अभिनवगुप्तमते तु तत्र दर्पणप्रतिबिम्बवत् सम्बन्धः। तदुक्तं शङ्कराचार्येण—

**विश्वं दर्पण-दृश्यमाननगरीतुल्यं निजान्तर्गतं,**
**पश्यन्नात्मनि मायया बहिरिवाद्भूतं यथा निद्रया॥**
**यः साक्षीकुरुते प्रबोधसमये स्वात्मानमेवाव्ययं,**
**तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥ इति॥**

यथा निर्मलदर्पणे ग्राम-नगर-वृक्षादिप्रतिबिम्बितं सत् दर्पणेनाभिन्नत्वेऽपि दर्पणात् परस्परतोऽपि भिन्नमिव प्रतीयते, तथा पूर्णसंविद्रूपे परमेश्वरे प्रतिबिम्बितं विश्वमिदमभिन्नमपि घटपटादिरूपेण भिन्नवदवभासते। (पदार्थकारिकायामप्येवम् १९/१३) लौकिकजगति प्रतिबिम्बं सत्तावतो बिम्बस्योपरि निर्भरं करोति, परन्तु त्रिकदर्शने परमेश्वरस्य स्वातन्त्र्यशक्तिहेतोर्बिम्बं विनापि जगद्रूपस्य प्रतिबिम्बं स्वत एवोत्पद्यते। अत एव द्वैतभावना कल्पना प्रसूता, अद्वैतभावनैव पारमार्थिकसत्यम्। इममाभासं प्रतिबिम्बसिद्धान्तं वा प्रतिपादयितुं त्रिकदर्शनस्य दार्शनिकदृष्टि- "राभासवाद" इति नाम्नाभिहिता। "आभासरूपा एव जडचेतनपदार्थाः" (प्रत्यभिज्ञाविमर्शिनी ३/२/१)। अभिनवगुप्तस्तदीयविवृत्तिविमर्शिन्यां यथार्थमेवाह—

**अन्तर्विभाति सकलं जगदात्मनीह,**
**यद्वद् विचित्ररचना मुकुरान्तराले।**
**बोधः पुनर्निजविमर्शनसारयुक्त्या,**
**विश्वं परामृशति नो मुकुरस्तथा तु॥**

त्रिकदर्शनमते ब्रह्मण आत्मस्वरूपं जीवजगत्। यत एतच्चितिशक्तेर्विजृम्भणमुल्लासो वा। सा चितिशक्तिर्ब्रह्मणो विमर्शरूपेणात्मानं प्रकटयितुं समर्था भवति। दर्पणे मुखप्रतिबिम्बं पतति, तत्र करणरूपं दर्पणं मुखप्रतिबिम्बतो भिन्नवस्तुत्वेन प्रतीयते। किन्त्वाभासवादमते स्वतःप्रकाशचितिशक्तेरुल्लासे ब्रह्मैव जीवजगद्रूपेण प्रतिबिम्बितं भवति। किन्त्वेतत्प्रतिबिम्बे दर्पणरूपस्वातन्त्र्यम्। अन्यवस्तुन आवश्यकता नास्ति। अत्र ब्रह्मैव बिम्बं, प्रतिबिम्बं, दर्पणं, कर्ता, कर्म, करणमिति सर्वम्। एतत् सर्वं मिलितमेव ब्रह्म चितिशक्तिर्वोच्यते। यथा सूर्य-सौर-प्रकाशयोरभेदः, चन्द्रचन्द्रिकयोरभेदः, तद्वद् ब्रह्म-चितिशक्त्योरभेदः। भ्रमदूरीकरणार्थम् उल्लास ऐवत्युक्तम्, अर्थाच्छक्तिरेषा ब्रह्मणः पृथगुपलब्धाऽपि वस्तुतस्ततोऽभिन्नैव। यथा सूर्य-सौर-प्रकाशयोर्भिन्नत्वे प्रतीयमानेऽपि वस्तुतोऽभेद एव तथेति बोध्यम्।

## विवर्तवाद आभासवादश्च

**अत्र प्रकरणे श्रीमच्छङ्कराचार्यस्य विवर्तवादेन सह आभासवादस्य प्रतिबिम्बवादस्य वा सादृश्यवैसादृश्ये लक्षणीये।** विवर्तवादे जीवजगतोः ब्रह्मतः पृथक् प्रतीतौ **सत्यमपि वस्तुतो ब्रह्मैव जीवजगद्रपूेण प्रतिभाति।** किन्तु विवर्तवादे जगज्जडं मिथ्या-**मायायाः कार्यमित्युच्यते।** त्रिकदर्शनस्याऽऽभाववादमते जगदिदं ब्रह्मणश्चितिशक्ते-

रुल्लासः सूर्य–सौरप्रकाशवदभिन्नः। जीव–जगदिदं चिन्मयशक्तेः स्फुरणम्। अत एवाभ्यां मतेऽपि जगन्मिथ्या न भवति।

साङ्ख्यस्य "परिणामवाद" मते वस्तुनो रूपं तिरोदधद् रूपान्तरे परिणमते। प्रकाशतनोः परमशिवस्य प्रकाशतिरोधाने जगदिदं तत्क्षणादेवान्धकारमयं भवति। अतएव विवर्तवाद–परिणामवादयोर्मध्ये कतरो यथार्थ इति न सम्यक्तया प्रतीयते। वस्तुतस्तु स्वातन्त्र्यवाद–आभासवादश्चेति द्वावेव बुद्धिगम्यत्वेन प्रामाणिकौ।

"अविद्या अनिर्वाच्या वैचित्र्यञ्चाधत्ते" इति व्याहृतम्। परमेश्वरी शक्तिरेवेयमिति हृदयावर्जकः क्रमः। तस्माद् अनपह्नवनीयः प्रकाशविमर्शात्मकसंवित्स्वभावः परमशिवो भगवान् स्वातन्त्र्यादेव प्रकाशते, इत्ययं स्वातन्त्र्यवादः प्रोन्मीलितः। (अभिनवगुप्तकृतप्रत्यभिज्ञाविमर्शिनी)

## परिणामवादः

**अवस्थान्तरतापत्तिरेकस्य परिणामिता।**
**स्यात्क्षीरदधिमृत्कुम्भसुवर्णकुण्डलं यथा॥**

(पञ्चदशी १३/८)

एकस्य वस्तुनः पूर्वावस्थां परित्यज्यावस्थान्तरसम्प्राप्तिः परिणामः। यथा दुग्धं दधिरूपं, मृत्तिका घटरूपं, सुवर्णं कुण्डलरूपञ्च दधाति।

## विवर्तवादः

**अवस्थान्तरभानं तु विवर्तो रज्जुसर्पवत्।**
**निरंशेऽप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात्॥**

(पञ्चदशी १३/९)

पूर्वावस्थापरित्यागमकृत्वाऽप्यन्यावस्थाप्राप्तिर्नाम विवर्तः। यथा रज्जुरूपवस्तुनः सर्परूपेण भानप्रतीतिर्नाम विवर्त इति। विवर्तोऽयं निरवयवे आकाशादावपि दृश्यते। ये तावदाकाशस्वरूपं न जानन्ति, तेषां मतेनाकाशोऽधोमुखः कटाहसदृशस्तलयुक्तः प्रतीयते। आकाशस्य वर्णहीनत्वे सत्यपि स नीलरूपात्मको प्रतीयते।

## त्रिपुरासिद्धान्तः

प्रत्यभिज्ञात्रिपुरामतयोश्च पारस्परिकसम्बन्धो वर्तते। यथा काश्मीरीयशैवागमोक्त–प्रत्यभिज्ञादर्शनस्य (त्रिकसिद्धान्तस्य वा) शाक्तागमोक्तत्रिपुरासिद्धान्तस्य च मध्ये उपासनापद्धतिगतपार्थक्ये विद्यमानेऽपि तत्वदृष्ट्या उभयोर्मध्ये फलतो न कोऽपि भेदो दृश्यते। परन्तु द्वयोर्मतयोरैक्यं मूलत एकस्यामेव मतौ प्रतिष्ठितमस्ति। तस्मादेव दृश्यते यत् प्राचीनशास्त्राचार्यास्त्रिपुरासिद्धान्तसम्बन्धीग्रन्थरचनाकाले शिवसूत्र–प्रत्यभिज्ञाहृदयेश्वरप्रत्यभिज्ञाविमर्शिनी तन्त्रालोकादिसुप्रसिद्धशैवग्रन्थेभ्यः प्रमाणसंग्रहं कृतवन्तः। पक्षान्तरे, उत्पलदेवक्षेमराजाभिनवगुप्त–महेश्वरानन्दादि–शैवाचार्याः प्रयोजनानुसारेण योगिनीहृदयकामकलाविलास–त्रिपुरासुन्दरीमन्दिर–प्रभृतिग्रन्थेभ्यश्च

प्रमाणान्युद्धृतवन्तः। परशुरामकल्पसूत्र-बिन्दुसूत्र-तन्त्रराज-त्रिपुरा-रहस्य-नित्यहृदय-वामकेश्वरतन्त्रसौभाग्यरत्नाकर-प्रभृतयश्च त्रिपुरामतस्य श्रेष्ठग्रन्थाः। भास्कररायो-रामेश्वरो-लक्ष्मीधर-उमानन्दनाथस्तथा अमृतानन्दनाथश्च त्रिपुरामतस्य व्याख्यातारः।

## त्रिपुरासुन्दरी ललितादेवी वा

शैवागमे तत्त्वातीत-परमसत्तैव परमशिव इति नाम्नाऽभिहितः। त्रिपुरासिद्धान्त-मतेनासौ परमसत्ता त्रिपुरासुन्दरी ललिताम्बिका चेति नामभिरभिहिताऽभवत्। प्रत्यभिज्ञादर्शनस्य यत् शिवतत्त्वं शक्तितत्त्वञ्चेत्युच्यते तदेव त्रिपुरामतस्य कामेश्वरः कामेश्वरी चेति, तथा गौडीयवैष्णवमतस्य श्रीकृष्णो राधा चेति नामभ्यामभिहितं भवति। कामेश्वर-कामेश्वरी-सामरस्यं साम्यावस्था वा "सुन्दरी" वा त्रिपुरासुन्दरीति कथ्यते। त्रिपुरा हि सर्वाधिष्ठानरूपा, सत्यरूपा, समोनाधिकवर्जिता, सच्चिदानन्द-मयी, समरसा, श्रीललिताऽम्बिका चेति। एषैव सर्ववेदान्ततात्पर्यभूमिः। इत्येवं प्रकारेण निरतिशयसौन्दर्यमूर्तिरियं मातृरूपेण परिकल्पितेति साधना-राज्यस्यैकं निगूढं रहस्यम्। श्रीमच्छङ्कराचार्यश्च निखिलसौन्दर्याधारभूतायाः ललितादेव्याः काञ्चिद् वर्णनमकरोत् "सौन्दर्यलहरी" ग्रन्थे—

**तदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं,**
**कवीन्द्राः कल्पन्ते कथमपि विरञ्चिप्रभृतयः।**
**यदालोक्यौत्सुक्यादमरललना यान्ति मनसा,**
**तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम्॥**

हे हिमालयकन्ये, विरिञ्चिप्रभृतिश्रेष्ठकवयस्तव सौन्दर्यवर्णने न कथमपि समर्था अभूवन्। अमरललनागणास्तु समुत्सुकचित्तास्तव तल्लोकातीतं सौन्दर्यमालोक्य कृच्छ्रसाध्यतपःसाध्यत्वाद् दुष्प्राप्यां शिवसायुज्यमुक्तिं लभन्ते।

भगवत्याः ललितादेव्याः निरतिशयसौन्दर्यस्य किञ्चिन्मात्रं लब्ध्वैव विष्णु-र्मोहिनीमूर्तिधारणेन शङ्करमपि मोहितमकरोत्। अस्या एव कृपाकटाक्षेण मदनो जितेन्द्रियाणां मुनीनामपि मनो हरति।

**हरिस्तामाराध्य प्रणतजनसौभाग्यजननीं**
**पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत्।**
**स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा**
**मुनःनामप्यन्तः प्रभवति हि मोहाय महताम्॥**

(सौन्दर्यलहरी)

हे मातः प्रणतजनगणस्य सौभाग्यदायिनीं त्वामाराध्य विष्णुः पुरा नारी भूत्वा महायोगिनं त्रिपुरान्तकं महादेवमपि विक्षुब्धमकरोत्। कामदेवोऽपि त्वां नत्वा रति-नयनानन्दकरेण स्वशरीरेण महात्मनां मुनीनामन्तःकरणं मोहयितुं सक्षमोऽभवत्।

## त्रिपुरासुन्दरी नामरूपभेदः

त्रिपुरोपासकाश्चन्द्ररूपेणास्या उपासनां कुर्वन्ति। चन्द्रस्य षोडशकलाः भवन्ति, ते सर्वा एव नित्याः। तस्मात् सम्मिलितभावेन सा ''नित्यषोडशिके''ति नाम्ना वर्ण्यते। प्रथमपञ्चदशकलानाम् उदयास्तह्रासवृद्धयः प्रायशो भवन्ति, किन्तु षोडश-कलायास्तद्वदुदयादयो न भवन्ति। एषैव ताव ''दमृता'' नाम चन्द्रकला। वैयाकरणा-स्तां ''पश्यन्ती'' नाम वाणीं वदन्ति। दर्शनशास्त्रेऽस्याः पारिभाषिकं नाम ''आत्मे'' ति। मन्त्रशास्त्रे मन्त्रस्वरूपं देवतास्वरूपं वोच्यते। योऽस्माभिः पूर्णचन्द्र इति कथ्यते, वस्तुतः स पूर्णचन्द्रो न भवति। यस्मादस्य क्षयं उदयञ्च भवतः। परन्तु पूर्णवस्तुनो न्यूनाधिकभावो न भवति। पूर्णता तु षोडश्यामेव कलायां विद्यते, सा च नित्योदिता, अमृतस्वरूपा, अखण्डा चेति। सैव महात्रिपुरासुन्दरी, ललिता, सौन्दर्यानन्दस्य परमं धाम। अपिच सा परकला चिदेकरसा श्रीविद्या। प्रथमपञ्चदशकलानां कालचक्रेण सह सम्बन्धो वर्तते, स च सूर्यचन्द्रयोर्व्यवधानसंयोगादिफलस्वरूप-प्रतिपदादितिथिरूपेण विद्यमानः। अत एव नित्यानामप्येतासां पञ्चदशकलानामा-विर्भावतिरोभावौ चोपलभ्यते। किन्तु षोडशी कला नित्यज्योतिर्मय-सहस्र-दलकमल-कणिकास्थ-नित्यकलायुक्त-श्रीचक्रात्मक-चन्द्रबिम्बरूपा। एतदेव सुभ-गोदये उक्तम्—

**षोडशी तु कला ज्ञेया सच्चिदानन्दरूपिणी'' ति।**

सैव श्रीविद्योपासकानां नये त्रिपुरासुन्दरी, नित्यषोडशवर्षीया। गौडीयवैष्णव-सम्प्रदायैरपि सा एव श्रीकृष्णो नित्यषोडशवर्षीयो नित्यकिशोर इत्युच्यते—

**''नित्यकिशोर एवासौ भगवानन्तकारकः'' इति।**

## ललिता-श्रीकृष्णसमन्वयः

उक्तञ्च तन्त्रराजतन्त्रे—पराशक्तिर्ललितादेवी क्वचिद्वा पुरुषमूर्तिधारणं क्वचिद्वा रमणीयमूर्तिधारणमकरोत्। यदा सा पुरुषरूपं धारयति, तदा सा निखिलरसामृतमूर्ति-श्रीकृष्णरूपेण प्रकटितैव स्ववंशीनादेन जगद् विमोहयति। उक्तञ्च—

**काचिदाद्या ललिता वै पुंरूपा कृष्णविग्रहा।**
**वंशीनाद-समारम्भादकरोद् विवशं जगत्॥ इति।**

ललितादेवी-श्रीकृष्णयोरभिन्नताविषये कारणमेतदेव लक्षणीयम्। उपासना-पद्धत्यनुसारेण अपसमर्पणस्यायमेव साधारणनियमो यत् स्त्रीदेवताया वामकरे, पुंदेव-तायाश्च दक्षिणकरे जपसमर्पणं कार्यमिति। किन्तु ललितादेव्याः जपसमर्पणं दक्षिणकर एव विहितम्। पक्षान्तरे श्रीकृष्णस्यापि मोहिनीमूर्तिधारणविवरणमत्र स्मर्तव्यम्।

## ज्ञानभक्तिसामञ्जस्यम्

त्रिकदर्शन-त्रिपुरासिद्धान्तयोर्मते अद्वैतवादेन सह मनोरमभक्तिवादस्य

समन्वयः साधितोऽभवत्। शिवाद्वैत-शाक्ताद्वैतवादयोरेतदेवं गुरुत्वपूर्णं वैशिष्ट्यं यदेतयोर्मध्ये कोऽपि शुष्कज्ञानमार्गो नास्ति ज्ञानहीनभक्तिमार्गोऽपि नास्ति, परन्तू-भयसिद्धान्तेऽप्युभयोर्ज्ञानभक्त्योः सामञ्जस्यं विद्यते। शाङ्कराद्वैतवादस्य चरमावस्थायां भक्तिस्थानं नास्ति। शाङ्करमते भक्तेर्द्वैतमूलकत्वाददद्वैतज्ञानोदये तस्या अस्तित्वं न विद्यते। किन्त्वेतदुक्तिः साधनारूपभक्तिसम्बन्धे प्रयोज्या, परभक्तिविषये साध्यरूप-भक्तिसम्बन्धे वा प्रयोज्या न भवति। त्रिकदर्शने त्रिपुरासिद्धान्ते च ''अद्वैतभक्तिः'' नित्यसिद्धपदार्थरूपेणैव स्वीक्रियते। शास्त्रोक्तेरेव महात्मनामुपलब्धितोऽस्या अस्ति-त्वमुपलभ्यते। योऽस्माभिर्मोक्ष इति कथ्यते, स खलु नित्यसिद्धज्ञानभक्त्यावरण-भङ्गजनितसमुन्मेषमात्रम्। त्रिकदर्शने एष एव ''चिदानन्दलाभ'' इत्युच्यते। अद्वैत-ज्ञानोत्पत्तेरनन्तरं या भक्तिरुदिता भवति सा निर्व्याजाऽहैतुकी भक्तिरेवाऽद्वैतभक्ति-रिति कथ्यते। एतादृशीं भक्तिमेव लक्ष्यीकृत्य श्रीमद्भागवते व्यासदेवेनोक्तम्—

**आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥** १/७/१० ॥

ब्रह्मभूताऽविद्याग्रन्थिशून्याः मुनयोऽपि श्रीभगवत्या अहैतुकीं भक्तिं कुर्वन्ति। इत्थमेव श्रीभगवतः सर्वाकर्षी स्वभाव इति। विद्वद्वर्यो नरहरिः ''बोधसार'' ग्रन्थे एतत्सम्बन्धे यदवदत् तद् विशेषभावेनैव प्रणिधानयोग्यम्—

**द्वैतं मोहाय बोधात्प्राक् प्राप्ते बोधे मनीषया।**
**भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम्॥**
**जाते समरसानन्दे द्वैतमप्यमृतोपमम्।**
**मित्रयोरिव दम्पत्योर्जीवात्मपरमात्मनोः॥ ३२/४२/४३॥**

ज्ञानोदयात्पूर्वं द्वैतभावो मोहाय भवति। किन्तु ज्ञाने जाते भक्त्यर्थं बुद्ध्या यद्द्वैतभावः कल्पितो भवति सोऽद्वैतापेक्षयापि सुन्दरतरः। जीवब्रह्मणोरेकरससुखा-विर्भावे भक्त्युद्देश्येन जीवात्म-परमात्मनोर्मध्ये यो भेदः पृथक्त्वं वा यत्कल्पितं भवति तदपि मुक्तिसुखवत् सुखमावहति। परस्पर-प्रेमाकृष्टयोर्दम्पत्योः पृथक्त्वं यथा परस्परसुखकारणं तद्वदिति तत्त्वम्।

## निष्कर्षः

आद्याशक्तिर्दशमहाविद्या च भगवती परमेश्वरी चण्डीयुगपत् विश्वातिरिक्ता आद्या पराशक्तिः अपि च विश्वव्यापिनी विश्वरूपिणी महाशक्तिः। सा एका अद्विती-यापि, तस्या बहुविश्वमूर्त्तयश्च, एवं नानाविधविग्रहाः विभूतयश्च।

दशमहाविद्यासु एकाखण्डविश्वशक्तेर्दशविधप्रकाशाः, याभिः शक्तिभिः परा-शक्तिर्विश्वजगन्नियन्त्रितं परिचालितञ्च करोति। उक्तञ्च—

**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च[१]।**

१. श्वेताश्वतरोपनिषद् ६/८

ब्रह्मणः परा-शक्तिर्विविधैवेति श्रुतौ कीर्तितम्। सा शक्तिर्ब्रहणः स्वभावसिद्धा ज्ञानक्रिया बलक्रिया च। महानिर्वाणतन्त्रे, महेश्वरः एतां पराशक्तिं सम्बोध्य कथयति यत् कालीताराप्रभृतयो विद्या एकस्या अद्वितीयायाः शक्तेरेव विभिन्नाः प्रकाशाः।

**त्वमाद्या सर्वविद्यानामस्माकमपि जन्मभूः,**
**त्वं जानासि जगत् सर्वं न त्वां जानाति कश्चन॥**
**त्वं काली तारिणी दुर्गा षोडशी भुवनेश्वरी,**
**धूमावती त्वं बगलाभैरवी छिन्नमस्तका।**
**त्वमन्नपूर्णा वाग्देवी त्वं देवी कमलालया।**
**सर्वशक्तिस्वरूपं त्वं सर्वदेवमयी तनुः॥**

त्वमेव सर्वासां विद्यानामादिभूता। अस्माकं ब्रह्मा-विष्णु-महेश्वराणाञ्च उत्पत्ति-स्थानम्। त्वमेव जगत् सर्वं जानासि, किन्तु त्वां कोऽपि न जानाति। त्वमेव काली, तारा, दुर्गा, षोडशी, भुवनेश्वरी, धूमावती, बगलाभैरवी छिन्नमस्ता च, त्वमेव अन्नपूर्णा सरस्वती लक्ष्मीश्च, त्वमेव सर्वशक्तिस्वरूपिणी, तव शरीरं सर्वदेवतामयम्।

या खलु विश्वातिरिक्ता सूक्ष्मातिसूक्ष्मा निराकारा आद्या परा शक्तिः सा कालीतारादिविग्रहं धृत्वा जगति अभिव्यक्ता भवति। महाविद्याविग्रहं धृत्वा लोकान् सद्बुद्धिं प्रददाति।

**शक्तेः माहात्म्यम्**

तन्त्रशास्त्रमेतदेव पुनः पुनः निर्दिशति यत् लीलाभेदे विभिन्नमूर्तिधारणेनापि स्वरूपतः सा एकाभिन्नेत्याकाराऽभेदज्ञानोपरि स्थिरप्राणप्रतिष्ठया साधकः स्वीयेष्ट-देवताराधनां कर्त्तुमर्हति। या काली सैव तारा, नीलसरस्वती, त्रिपुरसुन्दरी च; सा एव साधकाय वाञ्छितफलं ददाति। यः साधकोऽभेदभावेनैवासां साधनायां प्रवृत्तो भवति स एव त्रिलोकपूज्यः तत् पुत्रश्च भवेत्। तदुक्तं— भेदं कृत्वा यदा मन्त्रो साधयेदत्र साधनाम्। न तस्य निष्कृतिर्देवि निरये पच्यते हि सः॥ यस्तावत् भेदबुद्या चैतसां साधनायां प्रवृत्तो भवति; हे देवि! तस्य निष्कृतिर्नास्ति, स नरकाग्निना दह्यते।

तन्त्रशास्त्रे दशमहाविद्यानां कालीतारादिविशेष-विशेषनाम्नस्तात्पर्यनिरूपितम्। तदुक्तं—

**कालनियन्त्रणात्काली तत्वज्ञानप्रदायिनी।**

महाकाल-नियन्तृत्वात् कालीति नाम्ना प्रसिद्धा साधकाय तत्त्वज्ञानं प्रददाति। एषा विद्या शुक्लापि, कलौ कृष्णत्वमापन्ना सती नीलरूपिण्यभवत्। अवलीलया वाक्शक्तिप्रदानादेषा, ''नीलसरस्वती'' गीयते। एषा सर्वदा जीवपरित्राणकारित्वेन तारा तारिणी वा।

एषा महाविद्या सर्वदा साधकाय श्रियः प्रदानात् श्रीविद्यानाम्नाभिहिता।

त्रिगुणातीत्वेन षोडशीति कीर्तितम्। एषा महाविद्या चतुर्दशभुवनानां पालयितृत्वेन सृष्टिस्थितिकारित्वेन च भुवनेश्वरीति कीर्त्यते। एषा महाविद्या साधकस्य सर्वविध-दुःखं नाशयति, तथा कालभैरवभार्यात्वेन च भैरवीति विश्रुतम्। देवी छिन्नमस्ता महाविद्या, त्रिशक्तिरूपिणी, मृत्युदायिनी छिन्नमस्तकत्वात् "छिन्नमस्ता"। देवी त्रिगुणमयी मोहिनी मोक्षदायिनी नित्या च। महामाया धूमावती धूम्रासुरविनाशिनी, धूमावर्णा, "धूमावती" तथा धर्म्मार्थकाममोक्षप्रदायिनी, अर्थात् अज्ञाननाशिनी महाविद्या बगलाया बकारेण वारुणी देवी गकारेण सर्वसिद्धिदात्रिदेवी लकारेण पृथ्वीरूपिणी बगलात्रिरूपिणी तथा चैतन्यरूपिणी। एषा महाविद्या मदशील-त्वान्मतङ्गासुरनाशित्वेन च साधकानां सर्वापदुद्धारिणी मातङ्गीति कीर्त्यते। एषा महाविद्या वैकुण्ठवासित्वेन कमला नाम्नाभिहिता, पातालावस्थानात् लक्ष्मीरिति नाम्नापि च कीर्त्यते।

एताः दशमहाविद्याः सर्वा एव "सिद्धिविद्याः" शब्देन कीर्तिताः। सर्वदा एताः साधकाय धर्म-अर्थ-काम-मोक्षफलञ्च प्रयच्छन्ति। कलियुगे येन केन प्रकारेण एतासामुपासना पूर्णफलप्रदाः भवन्ति। त्रिभुवने आसां दशमहाविद्यानां समानं न किमपि विद्यते इति निश्चितं सत्यमेव। आसां नाम्नामेकवारोच्चारणेनापि जनः सर्वपापेभ्यः प्रमुच्यते। हे देवेशि, आसां स्मरणेनैव संसारबन्धनान्मुक्तो भवति। जगज्जनन्या नाम मन्त्रजपे, तासां दिव्यमूर्तिध्यानेन तथा लीलावाहिनीश्रवणकीर्त्तनाभ्यां च पापराशिर्विदुरितो भवति। उक्तञ्च—पापराशीनां मेरुपर्वतपरिमानत्वेऽपि यदि जनः कात्यायनीशरणं व्रजेत्, तस्य क्षणमात्रेणैव सर्वपापराशिर्नश्यति। यः सदा दुर्गाराधन-तत्परः स महापातकोत्पन्नदोषजालैरपि पद्मपत्रं जलेनेव न लिप्यते। अतएव हे सुरथ! मया सर्वप्रयत्नेन सर्वाभीष्टफलप्रदायिन्या गुह्यातिगुह्यतरदिव्यमूर्तिसमूहस्य ध्यानादिकं सर्वाङ्गमुक्तम्। गुह्याद् गुह्यतरं महत्—देव्या महत् स्वरूपस्य वर्णनं केनापि न कर्तुं शक्यते। तस्याः कृपया एव अनुभूतिगम्यम्। सिद्धमहापुरुषादयः समाधियोगेन तस्याः साक्षात्कारं लब्ध्वा भाषया यत् प्रकाशयन्ति तदपि ते सङ्गोपनेन रक्षन्ति। अनधिकारिणे कदापि न प्रकाशयन्ति। अतएव आदिशक्तिम् नमस्कृत्य समाप्यते एष शोधप्रबन्धः। शक्तेः स्वरूपमाहात्म्यरहस्यादिकं च को वर्णितुं पार्यते, ततश्च महाशक्तिविषये एतदेवोक्त्वा विरमामि यत्—

**वेदो न यत् पारमुपैति मातः नैवागमो न प्रथमाधिपश्च।**
**कस्मान्नरः क्षीणमतिस्तवाम्ब तद्रूपसम्भावनात् परः स्याम्॥**

**॥ॐ शान्तिः शिवश्च भूयात्॥**



# सहायक-ग्रन्थ-सूची

१. अग्निपुराणम्
२. अथर्वणसंहिता
३. अथर्ववेदः
४. अष्टप्रकरणम्
५. अहिर्बुध्न्यसंहिता
६. ईश्वरप्रत्यभिज्ञाविमर्शिनी
७. ऋक्सूक्तसमुच्चयः
८. ऋग्वेदः
९. ऐतरेयारण्यकम्
१०. कठोपनिषद्
११. काठकसंहिता
१२. कात्यायिनीतन्त्रम्
१३. कालिकापुराणम्
१४. कुलार्णवतन्त्रम्
१५. केनोपनिषद्
१६. गायत्रीपुरश्चरणपद्धतिः
१७. गीतोपनिषद्
१८. गुरुगीता
१९. गोरक्षसंहिता
२०. जयाख्यसंहिता
२१. तत्त्वप्रकाशः
२२. तन्त्रसारः
२३. तन्त्रालोकः
२४. तैत्तिरीयारण्यकम्
२५. तैत्तिरीयोपनिषद्
२६. त्रिपुरामहिम्नस्तवः
२७. त्रिपुरारहस्यम् (ज्ञानखण्ड)
२८. दुर्गासप्तशती
२९. देवीपुराणम्
३०. देवीभागवतम्
३१. नित्याषोडशिकार्णवः
३२. पञ्चदशी
३३. प्रत्यभिज्ञाहृदयम्
३४. प्रपञ्चसारः
३५. प्रराप्रवेशिका
३६. परात्रिंशिका
३७. ब्रह्मसूत्रम्
३८. भागवतसुबोधिनी
३९. भारतीय संस्कृति और साधना
४०. भावनोपनिषद्
४१. भावप्रकाशः
४२. मनुस्मृतिः
४३. मन्त्र और मातृकाओं का रहस्य
४४. महार्थमञ्जरी
४५. मार्कण्डेयपुराणम्
४६. मुण्डकोपनिषद्
४७. मैथिली महोपनिषद्
४८. मोक्षकारिका
४९. योगदर्शनम्
५०. योगिनीहृदयम्
५१. रघुवंशमहाकाव्यम्
५२. रत्नत्रयम्
५३. रामचरितमानस
५४. रुद्रयामलम्
५५. रौरवागमः
५६. ललितासहस्रनाम

५७. लुप्तागमः
५८. वाराहपुराणम्
५९. विरूपाक्षपञ्चाशिका
६०. विवेकचूड़ामणिः
६१. विष्णुतत्त्वविनिर्णयः
६२. विष्णुपुराणम्
६३. वाचस्पत्यम्
६४. वाल्मीकिरामायणम्
६५. विंशतिका
६६. वृहदारण्यकोपनिषद्
६७. शक्ति अङ्क
६८. शब्दकल्पद्रुमः
६९. शाक्तदर्शनम्
७०. शारदातिलकम्
७१. शिवदृष्टिः
७२. शिवसूत्रम्
७३. श्रीकृष्णयामलं महातन्त्रम्
७४. श्रीपरमानन्दतन्त्रम्
७५. श्रीमद्भगवद्गीता
७६. श्रीमहारामायणम्
७७. श्रीरामतापनीयोपनिषद्
७८. श्री शारदातिलकम्
७९. श्वेताश्वेतरोपनिषद्
८०. षट्त्रिंशत्तत्वसंदोहः
८१. सप्तशतीसर्वस्वम्
८२. सात्वतसंहिता
८३. साम्बपञ्चाशिका
८४. साङ्ख्यसूत्रम्
८५. सूतसंहिता
८६. सुबोधिनी
८७. सौन्दर्यलहरी
८८. स्पन्दसन्दोहः
८९. स्वच्छन्दतन्त्रम्








## लेखक जीवन परिचय

डॉ० देशराजत्रिपाठीनामा श्रीमतः देवदत्त–त्रिपाठिनः ग्रन्थस्यास्य लेखकोऽस्ति। पुत्रः मातुर्नामचास्या स्वः गंगादेवी वर्तते। उत्तरप्रदेशीय सीतापुर मण्डलस्य अकबापुर ग्राम वास्तव्य–स्यास्य जन्मतिथिः एकोनषष्ट्याधिकोनविंशति शताब्द्याः दिसम्बर मासस्य विंशति दिनाङ्को वर्तते (२०/१२/५९)। एतस्य पिता समीप–वर्तिग्रामस्य महरिया नरेशस्य सचिव आसीत्। बाल्यकाले एवास्य पितुः स्वर्गगमनमभवत्। अयं बाल्यकालादेव भगवदाराधना योगसाधू–नादिविषयेषु रूचिमान् आसीत्। संगीत प्रियोऽयं सङ्गीतमय श्रीमद्भागवत् कथायावाचनं करोति। परमाराध्यात्मिकोऽयं समयमार्ग साधनायाः समुपासकोस्ति। एतदर्थमयं पुष्टिमार्गीय बल्ल–भसत्संगसमित्या भागवतव्यास इत्युपाधिना सम्मानितो वर्तते।